वाजसनेयिमाध्यन्दिनशाखीय

# यजुर्वेदसंहिता

## अथ प्रथमोऽध्यायः

इषे त्वोर्जे त्वा वायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय
कर्मण आप्यायध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरनमीवाऽअयक्ष्मा
मा व स्तेनऽईशत माघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात
बह्वीर्यजमानस्य पशून्पाहि १

वसोः पवित्रमसि द्यौरसि पृथिव्यसि मातरिश्वनो घर्मोऽसि
विश्वधाऽअसि । परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्
२

वसोः पवित्रमसि शतधारँवसोः पवित्रमसि सहस्रधारम् ।
देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा
कामधुक्षः ३

सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः ।
इन्द्रस्य त्वा भागꣳ सोमेनातनच्मि विष्णो हव्यꣳ रक्ष ४

अग्ने व्रतपते व्रतञ्चरिष्यामि तच्छकेयन्तन्मे राध्यताम् ।
इदमहमनृतात्सत्यमुपैमि ५

कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति
।
कर्मणे वाँवेषाय वाम् ६

प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ।
उर्वन्तरिक्षमन्वेमि ७

धूरसि धूर्व धूर्वन्तन्धूर्व तँय्योस्मान्धूर्वति तन्धूर्व यँव्वयन्धूर्वामः ।
देवानामसि वह्नितमꣳ सस्नितमम्पप्रितमञ्जुष्टतमन्देवहूतमम् ८
अह्रुतमसि हविर्धानन्दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् ।
विष्णुस्त्वा क्रमतामुरु वातायापहतꣳ रक्षो यच्छन्ताम्पञ्च ९

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
अग्नये जुष्टङ्गृह्णाम्यग्नीषोमाभ्याञ्जुष्टङ्गृह्णामि १०

भूताय त्वा नारातये स्वरभिविख्येषन्दृꣳहन्तान्दुर्याः
पृथिव्यामुर्वन्तरिक्षमन्वेमि पृथिव्यास्त्वा नाभौ
सादयाम्यदित्याऽउपस्थेऽग्ने हव्यꣳ रक्ष ११

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण
सूर्यस्य रश्मिभिः ।
देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्य यज्ञन्नयताग्रे यज्ञपतिꣳ
सुधातुँय्यज्ञपतिन्देवयुवम् १२

युष्माऽइन्द्रोवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वँव्वृत्रतूर्ये प्रोक्षिता स्थ
।
अग्नये त्वा जुष्टम्प्रोक्षाम्यग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ।
दैव्याय कर्मणे शुन्धध्वन्देवयज्यायै यद्वोऽशुद्धाः
पराजघ्नुरिदँव्वस्तच्छुन्धामि १३

शर्मास्यवधूतꣳ रक्षोवधूताऽअरातयोदित्यास्त्वगसि प्रति
त्वादितिर्वेत्तु ।
अद्रिरसि वानस्पत्यो ग्रावासि पृथुबुध्नः प्रति त्वादित्यास्त्वग्वेत्तु
१४

अग्नेस्तनूरसि वाचो विसर्जनन्देववीतये त्वा गृह्णामि बृहद्ग्रावासि
वानस्पत्यः स इदन्देवेभ्यो हविः शमीष्व सुशमि शमीष्व ।
हविष्कृदेहि हविष्कृदेहि १५

कुक्कुटोसि मधुजिह्वऽइषमूर्जमावद त्वया वयꣳ सङ्घातꣳ सङ्घातञ्जेष्म
वर्षवृद्धमसि प्रति त्वा वर्षवृद्धँवेत्तु परापूतꣳ रक्षः
परापूताऽअरातयोऽपहतꣳ रक्षो वायुर्वो विविनक्तु देवो वः सविता
हिरण्यपाणिः प्रति गृभ्णात्वच्छिद्रेण पाणिना १६

धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहि निष्क्रव्यादꣳ सेधा देवयजँवह ।
ध्रुवमसि पृथिवीन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि
भ्रातृव्यस्य वधाय १७

अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि
सजातवन्युपदधामि भ्रातृव्यस्य वधाय ।
धर्त्रमसि दिवन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि
भ्रातृव्यस्य वधाय ।
विश्वाभ्यस्त्वाशाभ्यऽउप दधामि चित स्थोर्ध्वचितो
भृगूणामङ्गिरसा तपसा तप्यध्वम् १८

शर्मास्यवधूतꣳ रक्षोवधूताऽअरातयोदित्यास्त्वगसि प्रति त्वादितिर्वेत्तु ।
धिषणासि पर्वती प्रति त्वादित्यास्त्वग्वेत्तु दिव स्कम्भनीरसि धिषणासि पार्वतेयी प्रति त्वा पर्वती वेत्तु धान्यमसि १९

धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा ।
दीर्घामनु प्रसितिमायुषे धान्देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि २०

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
सँवपामि समापऽओषधीभिः समोषधयो रसेन ।
सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ सम्मधुमतीर्मधुमतीभिः पृच्यन्ताम् २१

जनयत्यै त्वा सँयौमीदमग्नेरिदमग्नीषोमयोरिषे त्वा घर्मोसि विश्वायुरुरुप्रथा ऽउरुप्रथस्वोरु ते यज्ञपतिः प्रथतामग्निष्टे त्वचम्मा हिꣳसीद्देवस्त्वा सविता श्रपयतु वर्षिष्ठेधि नाके २२

मा भेर्मा सँविक्थाऽअतमेरुर्यज्ञोतमेरुर्यजमानस्य प्रजा भूयात्त्रिताय त्वा द्विताय त्वैकताय त्वा २३

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददेध्वरकृतन्देवेभ्यऽइन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः २४

पृथिवि देवयजन्योषध्यास्ते मूलम्मा हिꣳसिषँव्रजङ्गच्छ गोष्ठानँवर्षतु

ते द्यौर्बधान देव सवितः परमस्याम्पृथिव्याᳬ शतेन
पाशैर्योस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो मा मौक् २५

अपाररुम्पृथिव्यै देवयजनाद्बध्यासँव्व्रजङ्गच्छ गोष्ठानँव्वर्षतु ते
द्यौर्बधान देव सवितः परमस्याम्पृथिव्याᳬ शतेन पाशैर्योस्मान्द्वेष्टि
यञ्च वयन्द्विष्मस्तमतो मा मौक् । अररो दिवम्मा पप्तो द्रप्सस्ते
द्याम्मा स्कन्व्रजङ्गच्छ गोष्ठानँव्वर्षतु ते द्यौर्बधान देव सवितः
परमस्याम्पृथिव्याᳬ शतेन पाशैर्योस्मान्द्वेष्टि यञ्च वयन्द्विष्मस्तमतो
मा मौक् २६

गायत्रेण त्वा छन्दसा परिगृह्णामि त्रैष्टुभेन त्वा छन्दसा परि गृह्णामि
जगतेन त्वा छन्दसा परिगृह्णामि । सुक्ष्मा चासि शिवा चासि
स्योना चासि सुषदा चास्यूर्जस्वती चासि पयस्वती च २७

पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीञ्जीवदानुम् ।
यामैरयँश्चन्द्रमसि स्वधाभिस्तामु धीरासोऽअनुदिश्य यजन्ते ।
प्रोक्षणीरासादय द्विषतो वधोऽसि २८
प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ।
अनिशितोसि सपत्नक्षिद्वाजिनन्त्वा वाजेध्यायै सम्मार्ज्मि ।
प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳ रक्षो निष्टप्ताऽअरातयः ।
अनिशितासि सपत्नक्षिद्वाजिनीन्त्वा वाजेध्यायै सम्मार्ज्मि २९

अदित्यै रास्नासि विष्णोर्वेष्पोस्यूर्जे त्वादब्धेन त्वा
चक्षुषावपश्यामि । अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्ने मे भव
यजुषेयजुषे ३०
सवितुस्त्वा प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।

सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
तेजोसि शुक्रमस्यमृतमसि धाम नामासि
प्रियन्देवानामनाधृष्टन्देवयजनमसि ३१
इति प्रथमोऽध्यायः

## अथ द्वितीयोऽध्यायः

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टम्प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टाम्प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टम्प्रोक्षाम्यदित्यै व्युन्दनम् १

अदित्यै व्युन्दनमसि विष्णो स्तुपोऽस्यूर्णम्रदसन्त्वा स्तृणामि स्वासस्थान्देवेभ्यो भुवपतये स्वाहा भुवनपतये स्वाहा भूतानाम्पतये स्वाहा २

गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ।
इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ।
मित्रावरुणौ त्वोत्तरतः परिधत्तान्ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिडऽईडितः ३

वीतिहोत्रन्त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे ४

समिदसि सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै ।
सवितुर्बाहू स्थऽऊर्णम्रदसन्त्वा स्तृणामि स्वासस्थन्देवेभ्यऽआ त्वा वसवो रुद्राऽआदित्याः सदन्तु ५

घृताच्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सदऽआसीद
घृताच्यस्युपभृन्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सदऽआसीद
घृताच्यसि ध्रुवा नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सदऽआसीद प्रियेण धाम्ना प्रियꣳ सदऽआसीद । ध्रुवाऽअसदन्नृतस्य योनौ ता विष्णो

पाहि पा॒हि य॒ज्ञम्पा॒हि य॒ज्ञप॑तिम्पा॒हि माँय॑ज्ञ॒न्य॒म् ६

अग्ने॑ वाजजि॒द्वाज॑न्त्वा सरि॒ष्यन्त॒ँवाज॒जित॒ꣳ सम्मा॑र्ज्मि ।
नमो॑ दे॒वेभ्य॑ः स्व॒धा पि॒तृभ्य॑ः सु॒यमे॑ मे भूयास्त॒मस्क॑न्नम॒द्य ७

अस्क॑न्नम॒द्य दे॒वेभ्य॒ऽआज्य॒ꣳ सम्भ्रि॑यास॒मङ्घ्रि॑णा विष्णो॒ मा
त्वाव॑क्रमिष॒ँवसु॑मतीमग्ने ते छा॒याम॒प॑स्थेष॒ँविष्णो॒ स्थान॑मसी॒तऽइन्द्रो॑
वी॒र्य॑मकृणोदू॒र्ध्वो॑ऽध्व॒रऽआस्था॑त् ८

अग्ने॒ वेर्हो॒त्रँवेर्दू॒त्य॒मव॑तान्त्वान्द्यावा॑पृथि॒वीऽअव॒ त्वन्द्यावा॑पृथि॒वी
स्वि॑ष्टकृद्दे॒वेभ्य॒ऽइन्द्र॒ऽआज्ये॑न ह॒विषा॑ भूत्स्वाहा॒ सञ्ज्योति॑षा॒
ज्योति॑ः ९

मयी॒दमिन्द्र॑ऽइन्द्रि॒यन्द॑धात्व॒स्मान्रायो॑ म॒घवा॑नः सचन्ताम् ।
अ॒स्माक॑ꣳ सन्त्वा॒शिष॑ः स॒त्या न॑ः सन्त्वा॒शिष॒ऽउप॑हूता पृथि॒वी
मा॒तोप॒ माम्पृ॑थि॒वी मा॒ता ह्व॑यताम॒ग्निराग्नी॑ध्रा॒त्स्वाहा॑ १०

उप॑हूतो॒ द्यौष्पि॒तोप॒ मान्द्यौष्पि॒ता ह्व॑यताम॒ग्निराग्नी॑ध्रा॒त्स्वाहा॑ ।
दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णो हस्ता॑भ्याम् ।
प्रति॑गृह्णाम्य॒ग्नेष्ट्वा॒स्ये॒न॒ प्राश्ना॑मि ११

ए॒तन्ते॑ देव सवितर्य॒ज्ञम्प्रा॒हुर्बृह॒स्पत॑ये ब्र॒ह्मणे॑ ।
तेन॑ य॒ज्ञम॑व॒ तेन॑ य॒ज्ञप॑ति॒न्तेन॒ माम॑व १२

मनो॑ जू॒तिर्जु॑षता॒माज्य॑स्य॒ बृह॒स्पति॑र्य॒ज्ञमि॒मन्त॑नो॒त्वरि॑ष्टँय॒ज्ञꣳ
स॒मि॒मन्द॑धातु । विश्वे॑ दे॒वास॑ऽइ॒ह मा॑दयन्ता॒मो३म्प्रति॑ष्ठ १३

एषा तेऽअग्ने समित्तया वर्धस्व चा च प्यायस्व ।
वर्धिषीमहि च वयमा च प्यासिषीमहि ।
अग्ने वाजजिद्वाजन्त्वा ससृवाᳬसँवाजजितꣳ सम्मार्ज्मि १४

अग्नीषोमयोरुज्जितिमनूज्जेषँवाजस्य मा प्रसवेन प्रोहामि ।
अग्नीषोमौ तमपनुदताँय्योस्मान्द्वेष्टि यञ्च वयन्द्विष्मो
वाजस्यैनम्प्रसवेनापोहामि । इन्द्राग्न्योरुज्जितिमनूज्जेषँवाजस्य मा
प्रसवेन प्रोहामि ।
इन्द्राग्नी तमपनुदताँय्योस्मान्द्वेष्टि यञ्च वयन्द्विष्मो
वाजस्यैनम्प्रसवेनापोहामि १५

वसुभ्यस्त्वा रुद्रेभ्यस्त्वादित्येभ्यस्त्वा सञ्जानाथान्द्यावापृथिवी
मित्रावरुणौ त्वा वृष्ट्यावताम् । व्यन्तु वयोक्तꣳ रिहाणा
मरुताम्पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवङ्गच्छ ततो नो वृष्टिमावह
। चक्षुष्पाऽअग्नेऽसि चक्षुर्मे पाहि १६

यम्परिधिम्पर्यधत्थाऽअग्ने देव पणिभिर्गुह्यमानः ।
तन्तऽएतमनु जोषम्भराम्येष नेत्त्वदपचेतयाताऽअग्नेः प्रियम्पाथोपीतम्
१७

सᳬस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः ।
इमाँवाचमभि विश्वे गृणन्तऽआसद्यास्मिन्बर्हिषि मादयध्वᳬ स्वाहा
वाट् १८

घृताची स्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् ।
यज्ञ नमश्च तऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व

१९

अग्नेदब्धायोशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्टयै पाहि दुरद्मन्याऽअविषन्नः पितुङ्कृणु सुषदा योनौ स्वाहा वाडग्नये सँवेशपतये स्वाहा सरस्वत्यै यशोभगिन्यै स्वाहा २०

वेदोसि येन त्वन्देव वेद देवेभ्यो वेदोभवस्तेन मह्यंवेदो भूयाः । देवा गातुविदो गातुंवित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳ स्वाहा वाते धाः २१

सम्बर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तान्दिव्यन्नभो गच्छतु यत्स्वाहा २२

कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति ।
पोषाय रक्षसाम्भागोसि २३

सँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् २४

दिवि विष्णुर्व्यक्रꣳस्त जागतेन छन्दसा ततो निर्भक्तो योस्मान्द्वेष्टि यञ्च वयन्द्विष्मोन्तरिक्षे विष्णुर्व्यक्रꣳस्त त्रैष्टुभेन छन्दसा ततो निर्भक्तो योस्मान्द्वेष्टि यञ्च वयन्द्विष्मः पृथिव्यांविष्णुर्व्यक्रꣳस्त गायत्रेण छन्दसा ततो निर्भक्तो योस्मान्द्वेष्टि यञ्च वयन्द्विष्मोस्मादन्नादस्यै प्रतिष्ठायाऽअगन्म स्वः सञ्ज्योतिषाभूम २५

स्वयम्भूरसि श्रेष्ठो रश्मिर्वर्चोदाऽअसि वर्चो मे देहि ।
सूर्यस्यावृतमन्वावर्ते २६

अग्ने गृहपते सुगृहपतिस्त्वयाग्नेहङ्गृहपतिना भूयासꣳ
सुगृहपतिस्त्वम्मयाग्ने गृहपतिना भूयाः ।
अस्थूरि णौ गार्हपत्यानि सन्तु शतꣳ हिमाः सूर्यस्यावृतमन्वावर्ते
२७

अग्ने व्रतपते व्रतमचारिषन्तदशकन्तन्मेराधीदमहँयऽएवास्मि सोस्मि
२८

अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा ।
अपहताऽअसुरा रक्षाꣳसि वेदिषदः २९

ये रूपाणि प्रतिमुञ्चमानाऽअसुराः सन्तः स्वधया चरन्ति ।
परापुरो निपुरो ये भरन्त्यग्निष्टाँल्लोकात्प्रणुदात्यस्मात् ३०

अत्र पितरो मादयध्वँयथाभागमावृषायध्वम् ।
अमीमदन्त पितरो यथाभागमावृषायिषत ३१

नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो
जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोरय नमो वः
पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त
सतो वः पितरो देष्मैतद्वः पितरो वासऽआधत्त ३२

आधत्त पितरो गर्भङ्कुमारम्पुष्करस्रजम् । यथेह पुरुषोसत् ३३

ऊर्ज्जँवहन्तीरमृतङ्घृतम्पयः कीलालम्परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ३४

इति द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन १

सुसमिद्धाय शोचिषे घृतन्तीव्रञ्जुहोतन । अग्नये जातवेदसे २

तन्त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ३

उप त्वाग्ने हविष्मतीर्घृताचीर्यन्तु हर्यत । जुषस्व समिधो मम ४

भूर्भुवः स्वर्द्यौरिव भूम्ना पृथिवीव वरिम्णा ।
तस्यास्ते पृथिवि देवयजनि पृष्ठेऽग्निमन्नादमन्नाद्यायादधे ५

आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः । पितरञ्च प्रयन्त्स्वः ६

अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो दिवम् ७

त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तोरह द्युभिः
८

अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ।
अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा ।
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ९

सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या । जुषाणोऽअग्निर्वेतु स्वाहा ।
सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या । जुषाणः सूर्यो वेतु स्वाहा
१०

उपप्रयन्तोऽअध्वरम्मन्त्रँवोचेमाग्नये । आरेऽअस्मे च शृणवते ११

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳫं रेताᳫंसि जिन्वति १२

उभा वामिन्द्राग्नीऽआहुवध्याऽउभा राधसः सह मादयध्यै ।
उभा दातारविषाᳫं रयीणामुभा वाजस्य सातये हुवे वाम् १३

अयन्ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः ।
तञ्जानन्नग्नऽआरोहाथा नो वर्धया रयिम् १४

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँविभ्वँविशेविशे १५

अस्य प्रत्नामनु द्युतᳫं शुक्रन्दुदुह्रेऽअह्रयः । पयः सहस्रसामृषिम् १६

तनूपाऽअग्नेसि तन्वम्मे पाह्यायुर्दाऽअग्नेस्यायुर्मे देहि वर्चोदाऽअग्नेसि वर्चो मे देहि । अग्ने यन्मे तन्वाऽऊनन्तन्मऽआपृण १७
इन्धानास्त्वा शतᳫं हिमा द्युमन्तᳫं समिधीमहि । वयस्वन्तो वयस्कृतᳫं सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम् । चित्रावसो स्वस्ति ते पारमशीय १८

सन्त्वमग्ने सूर्यस्य वर्चसागथाः समृषीणाᳫं स्तुतेन ।

सम्प्रियेण धाम्ना समहमायुषा सँवर्चसा सम्प्रजया सꣳ रायस्पोषेण ग्मिषीय १९

अन्ध स्थान्धो वो भक्षीय मह स्थ महो वो भक्षीयोर्ज स्थोर्जँवो भक्षीय रायस्पोष स्थ रायस्पोषँवो भक्षीय २०

रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठेऽस्मिँल्लोकेऽस्मिन्क्षये । इहैव स्त मापगात २१

सꣳहितासि विश्वरूप्यूर्जा माविश गौपत्येन । उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्तऽएमसि २२

राजन्तमध्वराणाङ्गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे २३

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये २४

अग्ने त्वन्नोऽअन्तमऽउत त्राता शिवो भवा वरूथ्यः । वसुरग्निर्वसुश्रवाऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः २५

तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः । स नो बोधि श्रुधी हवमुरुष्या णोऽअघायतः समस्मात् २६

इडऽएह्यदितऽएहि काम्याऽएत । मयि वः कामधरणम्भूयात् २७

सोमानꣳ स्वरणङ्कृणुहि ब्रह्मणस्पते । कक्षीवन्तँयऽऔशिजः २८

यो रेवान्योऽअमीवहा वसुवित्पुष्टिवर्द्धनः । स नः सिषक्तु यस्तुरः २९

मा नः शꣳसोऽअररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ३०

महि त्रीणामवोऽस्तु द्युक्षम्मित्रस्यार्यम्णः । दुराधर्षँवरुणस्य ३१

नहि तेषाममा चन नाध्वसु वारणेषु । ईशे रिपुरघशꣳसः ३२

ते हि पुत्रासोऽअदितेः प्रजीवसे मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् ३३

कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यते ३४

तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ३५

परि ते दूडभो रथोस्माँ२ ॥ऽअश्नोतु विश्वतः । येन रक्षसि दाशुषः ३६

भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो वीरैः सुपोषः पोषैः ।
नर्य प्रजाम्मे पाहि शꣳस्य पशून्मे पाह्यथर्य पितुम्मे पाहि ३७

आगन्म विश्ववेदसमुस्मभ्यँवसुवित्तमम् । अग्ने सम्राडुभि द्युम्नमुभि सहुऽआयच्छस्व ३८

अयमुग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः । अग्ने गृहपतेभि द्युम्नमुभि सहुऽआयच्छस्व ३९

अयमुग्निः पुरीष्यो रयिमान्पुष्टिवर्धनः । अग्ने पुरीष्याभि द्युम्नमुभि सहुऽआयच्छस्व ४०

गृहा मा बिभीत मा वेपध्वमूर्जम्बिभ्रतऽएमसि । ऊर्जम्बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ४१

येषामुध्येति प्रवसन्येषु सौमनुसो बुहुः । गृहानुपह्वयामहे ते नो जानन्तु जानुतः ४२

उपहूताऽइह गावुऽउपहूताऽअजावयः । अथोऽअन्नस्य कीलालुऽउपहूतो गृहेषु नः । क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शँयोः शँयोः ४३

प्रघासिनो हवामहे मुरुतश्च रिशादसः । कुरम्भेण सुजोषसः ४४

यद्ग्रामे यदरण्ये यत्सुभायाँयदिन्द्रिये । यदेनश्चकृमा वुयमिदन्तदवयजामहे स्वाहा ४५

मो षू णऽइन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवुयाः । मुहश्चिद्यस्य मीढुषो युव्या हुविष्मतो मुरुतो वन्दते गीः ४६

अक्रन्कर्म कर्मकृतः सह वाचा मयोभुवा । देवेभ्यः कर्म कृत्वास्तम्प्रेत सचाभुवः ४७

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनो यासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि ४८

पूर्णा दर्वि परापत सुपूर्णा पुनरापत । वस्नेव विक्रीणावहा इषमूर्जꣳ शतक्रतो ४९

देहि मे ददामि ते नि मे धेहि नि ते दधे । निहारञ्च हरासि मे निहारन्निहराणि ते स्वाहा ५०

अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ५१

सुसन्दृशन्त्वा वयम्मघवन्वन्दिषीमहि । प्र नूनम्पूर्णबन्धुर स्तुतो यासि वशाँ॥ऽअनु योजा न्विन्द्र ते हरी ५२

मनो न्वाह्वामहे नाराशꣳसेन स्तोमेन । पितॄणाञ्च मन्मभिः ५३

आ नऽएतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यन्दृशे ५४

पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवँव्व्रातꣳ सचेमहि ५५

वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तः सचेमहि
५६

एष ते रुद्र भागः सह स्वस्राम्बिकया तञ्जुषस्व स्वाहैष ते रुद्र
भागऽआखुस्ते पशुः ५७

अव रुद्रमदीमह्यव देवन्त्र्यम्बकम् । यथा नो वस्यसस्करद्यथा
नः श्रेयसस्करद्यथा नो व्यवसाययात् ५८

भेषजमसि भेषजङ्गवेऽश्वाय पुरुषाय भेषजम् । सुखम्मेषाय मेष्यै
५९

त्र्यम्बकँयजामहे सुगन्धिम्पुष्टिवर्धनम् । उर्वारुकमिव
बन्धनान्मृत्योर्मुक्षीय मामृतात् । त्र्यम्बकँयजामहे
सुगन्धिम्पतिवेदनम् ।
उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः ६०

एतत्ते रुद्रावसन्तेन परो मूजवतोतीहि । अवततधन्वा
पिनाकावसः कृत्तिवासाऽअहिꣳसन्नः शिवोतीहि ६१

त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु
त्र्यायुषम् ६२

शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हिꣳसीः ।
निर्वर्त्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय

सु॒वीर्या॑य ६३

इति तृतीयोऽध्यायः

# अथ चतुर्थोऽध्यायः

एदमगन्म देवयजनम्पृथिव्या यत्र
देवासोऽअजुषन्त विश्वे ।
ऋक्सामाभ्याँ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ।
इमाऽआपः शमु मे सन्तु देवीरोषधे त्रायस्व स्वधिते मैनं
हिंसीः १

आपोऽअस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रम्प्रवहन्ति देवीरुदिदाभ्यः
शुचिरा पूतऽएमि ।
दीक्षातपसोस्तनूरसि तान्त्वा शिवाँ
शग्माम्परिदधे भद्रँवर्णम्पुष्यन् २

महीनाम्पयोसि वर्चोदाऽअसि वर्चो मे देहि ।
वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि ३

चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो
मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य
रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य
यत्कामः पुने तच्छकेयम् ४

आ वो देवासऽईमहे वामम्प्रयत्यध्वरे ।
आ वो देवासऽआशिषो यज्ञियासो हवामहे ५

स्वाहा यज्ञम्मनसः स्वाहोरोरन्तरिक्षात्स्वाहा द्यावापृथिवीभ्याँ

स्वाहा वातादारभे स्वाहा ६

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै
तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा । आपो
देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीऽउरोऽअन्तरिक्ष । बृहस्पतये
हविषा विधेम स्वाहा ७

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो रायऽइषुध्यति द्युम्नँवृणीत पुष्यसे
स्वाहा ८

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः
।
शर्मासि शर्म मे यच्छ नमस्तेऽअस्तु मा मा
हिꣳसीः ९

ऊर्गस्याङ्गिरस्यूर्णम्रदाऽऊर्जम्मयि धेहि । सोमस्य नीविरसि
विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य योनिरसि सुसस्याः
कृषीस्कृधि ।
उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा
पाह्यꣳहसऽआस्य यज्ञस्योदृचः १०

व्रतङ्कृणुत व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पति
र्यज्ञियः ।
दैवीन्धियम्मनामहे सुमृडीकामभिष्टये
वर्चोधाँयज्ञवाहसꣳ सुतीर्था नोऽअसद्वशे ।

ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते
नोवन्तु ते नः पान्तु तेभ्यः स्वाहा ११

श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः ।
ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु
देवीरमृताऽऋतावृधः १२

इयन्ते यज्ञिया तनूरपो मुञ्चामि न प्रजाम् ।
अंहोमुचः स्वाहाकृताः पृथिवीमाविशत पृथिव्या सम्भव १३

अग्ने त्वं सुजागृहि वयं सुमन्दिषीमहि ।
रक्षा णोऽअप्रयुच्छन्प्रबुधे नः पुनस्कृधि १४

पुनर्मनः पुनरायुर्मऽआगन्पुनः प्राणः
पुनरात्मा मऽआगन्पुनश्चक्षुः पुनः
श्रोत्रम्मऽआगन् ।
वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातु
दुरितादवद्यात् १५

त्वमग्ने व्रतपाऽअसि देवऽआ मर्त्येष्वा । त्वँयज्ञेष्वीड्यः ।
रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदात् १६

एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजङ्गच्छ ।
जूरसि धृता मनसा जुष्टा विष्णवे १७

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ।

शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि १८

चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि
यज्ञियास्यदितिरस्युभयतःशीर्ष्णी ।
सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि
बध्नीताम्पूषाध्वनस्पात्विन्द्रायाध्यक्षाय १९

अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योनु सखा सयूथ्यः ।
सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वावर्तयतु स्वस्ति सोमसखा
पुनरेहि २०

वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि ।
बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके २१

अदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्याऽइडायास्पदमसि
घृतवत्स्वाहा ।
अस्मे रमस्वास्मे ते बन्धुस्त्वे रायो मे रायो मा वयꣳ रायस्पोषेण
वियौष्म तोतो रायः २२

समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा ।
मा मऽआयुः प्रमोषीर्मोऽअहन्तव वीरंविदेय तव देवि सन्दृशि २३

एष ते गायत्रो भागऽइति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भागऽइति मे
सोमाय ब्रूतादेष ते जागतो भागऽइति मे सोमाय
ब्रूताच्छन्दोनामानाꣳ साम्राज्यङ्गच्छेति मे सोमाय ब्रूतादास्माकोसि
शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु २४

अभि त्यन्देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ
रत्नधामभि प्रियम्मतिङ्कविम् ।
ऊर्ध्वा यस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत
सुक्रतुः कृपा स्वः ।
प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि २५

शुक्रन्त्वा शुक्रेण क्रीणामि चन्द्रञ्चन्द्रेणामृतममृतेन ।
सग्मे ते गोरस्मे ते चन्द्राणि तपसस्तनूरसि प्रजापतेर्वर्णः परमेण
पशुना क्रीयसे सहस्रपोषम्पुषेयम् २६

मित्रो नऽएहि सुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ
स्योनः स्योनम् ।
स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः
सोमक्रयणास्तान्रक्षध्वम्मा वो दभन् २७

परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज ।
उदायुषा स्वायुषोदस्थाममृताँ२॥ऽअनु २८

प्रति पन्थामपद्महि स्वस्तिगामनेहसम् ।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु २९

अदित्यास्त्वगस्यदित्यै सदऽआसीद ।
अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षममिमीत वरिमाणम्पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानि ३०

वनेषु व्यन्तरिक्षन्ततान वाजमर्वत्सु पयऽउस्रियासु ।
हृत्सु क्रतुँवरुणो विक्ष्वग्निन्दिवि सूर्यमदधात्सोममद्रौ ३१

सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् ।
यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ३२

उस्रावेतन्धूर्षाहौ युज्येथामनश्रूऽअवीरहणौ ब्रह्मचोदनौ ।
स्वस्ति यजमानस्य गृहान्गच्छतम् ३३

भद्रो मेसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि ।
मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो
विदन्मा त्वा वृकाऽअघायवो विदन् ।
श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ सँस्कृतम् ३४

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत ३५

वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो
वरुणस्यऽऋतसदन्यसि वरुणस्यऽऋतसदनमसि
वरुणस्यऽऋतसदनमासीद ३६

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणः सुवीरोवीरहा प्रचरा सोम दुर्यान् ३७

इति चतुर्थोऽध्यायः

# अथ पञ्चमोऽध्यायः

अग्नेस्तनूरसि विष्णवे त्वा सोमस्य तनूरसि विष्णवे
त्वातिथेरातिथ्यमसि विष्णवे त्वा श्येनाय त्वा सोमभृते विष्णवे
त्वाग्नये त्वा रायस्पोषदे विष्णवे त्वा १

अग्नेर्जनित्रमसि वृषणौ स्थऽउर्वश्यस्यायुरसि पुरूरवाऽअसि ।
गायत्रेण त्वा छन्दसा मन्थामि त्रैष्टुभेन त्वा छन्दसा मन्थामि
जागतेन त्वा छन्दसा मन्थामि २

भवतन्नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः ३

अग्नावग्निश्चरति प्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ सदमप्रयुच्छन्त्स्वाहा
४

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे
शाक्वराय शक्वनऽओजिष्ठाय ।
अनाधृष्टमस्यनाधृष्यन्देवानामोजोनभिशस्त्यभिशस्तिपाऽअनभिशस्ते-
यमञ्जसा सत्यमुपगेषꣳ स्विते मा धाः ५

अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियꣳ सा मयि यो मम तनूरेषा
सा त्वयि ।
सह नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिर्मन्यतामनु
तपस्तपस्पतिः ६

अ॒ꣳशुर॑ꣳशुष्टे देव सो॒माप्या॑यता॒मिन्द्रा॑यैकधन॒विदे॑ ।
आ तुभ्य॒मिन्द्रः॒ प्याय॑ता॒मा त्वमिन्द्रा॑य प्यायस्व ।
आप्या॑यया॒स्मान्त्सखी॑न्त्स॒न्या मे॒धया॑ स्व॒स्ति ते॑ देव सोम
सु॒त्याम॑शीय ।
एष्टा॒ रायः॒ प्रेषे भगा॑यऽऋ॒तमृ॑तवा॒दिभ्यो॒ नमो॒ द्यावा॑पृथि॒वीभ्या॑म् ७

या ते॑ऽअग्नेयःश॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा ।
उ॒ग्रँवचो॒ऽअपा॑वधीत्त्वे॒षँवचो॒ऽअपा॑वधी॒त्स्वाहा॑ ।
या ते॑ऽअग्ने रजःश॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा ।
उ॒ग्रँवचो॒ऽअपा॑वधीत्त्वे॒षँवचो॒ऽअपा॑वधी॒त्स्वाहा॑ ।
या ते॑ऽअग्ने हरिश॒या त॒नूर्वर्षि॑ष्ठा गह्वरे॒ष्ठा ।
उ॒ग्रँवचो॒ऽअपा॑वधीत्त्वे॒षँवचो॒ऽअपा॑वधी॒त्स्वाहा॑ ८

त॒प्राय॑नी मेसि वि॒त्ताय॑नी मे॒स्यव॑तान्मा नाथि॒तादव॑तान्मा
व्यथि॒तात् ।
वि॒देद॒ग्निर्नभो॒ नामाग्ने॑ऽअङ्गिर॒ऽआयु॑ना॒ नाम्नेहि॒ यो॒स्याम्पृ॑थि॒व्यामसि॒
यत्तेना॑धृष्टन्नाम॑ य॒ज्ञियन्तेन॒ त्वा द॑धे वि॒देद॒ग्निर्नभो॒
नामाग्ने॑ऽअङ्गिर॒ऽआयु॑ना॒ नाम्नेहि॒ यो द्वि॒तीय॑स्याम्पृथि॒व्यामसि॒
यत्तेना॑धृष्टन्नाम॑ यज्ञियन्तेन॒ त्वाद॑धे वि॒देद॒ग्निर्नभो॒
नामाग्ने॑ऽअङ्गिर॒ऽआयु॑ना॒ नाम्नेहि॒ यस्तृ॒तीय॑स्याम्पृथि॒व्यामसि॒
यत्तेना॑धृष्टन्नाम॑ य॒ज्ञियन्तेन॒ त्वा द॑धे ।
अनु॑ त्वा दे॒ववी॑तये ९

सि॒ꣳह्य॑सि सपत्नसा॒ही दे॒वेभ्यः॑ कल्पस्व सि॒ꣳह्य॑सि सपत्नसा॒ही
दे॒वेभ्यः॑ शुन्धस्व सि॒ꣳह्य॑सि सपत्नसा॒ही दे॒वेभ्यः॑ शुम्भस्व १०

इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु प्रचेतास्त्वा रुद्रैः पश्चात्पातु
मनोजवास्त्वा पितृभिर्दक्षिणतः पातु विश्वकर्मा त्वादित्यैरुत्तरतः
पात्विदमहन्तप्तँवार्बहिर्धा यज्ञान्निःसृजामि ११

सिꣳह्यसि स्वाहा सिꣳह्यस्यादित्यवनिः स्वाहा सिꣳह्यसि
ब्रह्मवनिः क्षत्रवनिः स्वाहा सिꣳह्यसि सुप्रजावनी
रायस्पोषवनिः स्वाहा सिꣳह्यस्यावह देवान्यजमानाय स्वाहा
भूतेभ्यस्त्वा १२

ध्रुवोसि पृथिवीन्दृꣳह ध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युतक्षिदसि
दिवन्दृꣳहाग्नेः पुरीषमसि १३

युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः
स्वाहा १४

इदँविष्णुर्विचक्रमे त्रेधा निदधे पदम् ।
समूढमस्य पाꣳसुरे स्वाहा १५

इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा
१६

देवश्रुतौ देवेष्वा घोषतम्प्राची
प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वँयज्ञन्नयतम्मा जिह्वरतम् ।

स्वङ्गोष्ठमावदतन्देवी दुर्येऽआयुर्मा निर्वादिष्टम्प्रजाम्मा निर्वादिष्टमत्र रमेथाँवर्ष्मन्पृथिव्याः १७

विष्णोर्नुकँवीर्याणि प्रवोचँयः पार्थिवानि विममे रजाꣳसि ।
योऽअस्कभायदुत्तरꣳ सधस्थँविचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा १८

दिवो वा विष्णऽउत वा पृथिव्या महो वा विष्णऽउरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा १९

प्र तद्विष्णु स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा २०

विष्णो ररराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि ।
वैष्णवमसि विष्णवे त्वा २१

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददे नार्यसीदमहꣳ रक्षसाङ्ग्रीवाऽअपि कृन्तामि ।
बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचँवद २२

रक्षोहणँवलगहनँवैष्णवीमिदमहन्तँवलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तँवलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तँवलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तँवलगमुत्किरामि यम्मे सजातो

यमसंजातो निचुखानोत्कृत्याङ्किरामि २३

स्वुराडसि सपत्नुहा संत्रराडस्यभिमातिहा जंनराडसि रक्षोहा
सर्वुराडस्यमित्रहा २४

रक्षोहणों वो वलगहनः प्रोक्षामि वैष्णुवान्रक्षोहणों वो
वलगहनोवनयामि वैष्णुवान्रक्षोहणौं वो वलगहनोवस्तृणामि
वैष्णुवान्रक्षोहणौं वाँवलगहनाऽउपंदधामि वैष्णुवी रक्षोहणौं
वाँवलगहनौ पर्यूहामि वैष्णुवी वैष्णुवमसि वैष्णुवा स्थ २५

देवस्यं त्वा सवितुः प्रंसुवेश्विनौर्बाहुभ्यांम्पूष्णो हस्ताभ्याम् ।
आददे नार्यसीदमहं रक्षसाङ्ग्रीवाऽअपि कृन्तामि ।
यवौसि युवयास्मद्द्वेषौं युवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै
त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि २६

उद्दिवंꣳ स्तभानान्तरिक्षम्पृण दृꣳहस्व पृथिव्यान्द्युतानस्त्वा मारुतो
मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा ।
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ।
ब्रह्म दृꣳह क्षत्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह २७

ध्रुवासि ध्रुवोयँयजमानोस्मिन्नायतने प्रजया पशुभिर्भूयात् ।
घृतेन द्यावापृथिवी पूर्येथामिन्द्रस्य च्छदिरसि विश्वजनस्य च्छाया
२८

परि त्वा गिर्वणो गिरऽइमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः २९

इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवोसि । ऐन्द्रमसि वैश्वदेवमसि ३०

विभूरसि प्रवाहणो वह्निरसि हव्यवाहनः । श्वात्रोसि
प्रचेतास्तुथोसि विश्ववेदाऽउशिगसि ३१

उशिगसि कविरङ्घारिरसि बम्भारिरवस्यूरसि दुवस्वाञ्छुन्ध्यूरसि
मार्जालीयः सम्राडसि कृशानुः परिषद्योसि पवमानो नभोसि
प्रतक्वा मृष्टोसि हव्यसूदनऽऋतधामासि स्वर्ज्योतिः समुद्रोसि ३२

समुद्रोसि विश्वव्यचाऽअजोस्येकपादहिरसि बुध्न्यो
वागस्यैन्द्रमसि सदोस्यृतस्य द्वारौ मा मा सन्ताप्तमध्वनामध्वपते प्र
मा तिर स्वस्ति मेस्मिन्पथि देवयाने भूयान्मित्रस्य मा ३३

मित्रस्य मा चक्षुषेक्षध्वमग्नयः सगराः सगरा स्थ सगरेण नाम्ना
रौद्रेणानीकेन पात माग्नयः पिपृत माग्नयो गोपायत मा नमो वोस्तु
मा मा हिꣳसिष्ट ३४

ज्योतिरसि विश्वरूपँविश्वेषान्देवानाᳬ समित् ।
त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योन्यकृतेभ्यऽउरु यन्तासि वरूथᳬ
स्वाहा जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा ३५

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिँविधेम ३६

अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्रभिन्दन् ।
अयँवाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ३७

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ३८

देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ।
एतत्त्वन्देव सोम देवो देवाꣳ॥ऽउपागाऽइदमहम्मनुष्यान्त्सह
रायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये ३९

अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम
तनूस्त्वय्यभूदियꣳ सा मयि ।
यथायथन्नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिरमꣳस्तानु
तपस्तपस्पतिः ४०

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतङ्घृतयोने पिब प्रप्र यज्ञपतिन्तिर स्वाहा ४१

अत्यन्याꣳ॥ऽअगान्नान्याꣳ॥ऽउपागामर्वाक्त्वा परेभ्योविदम्परोवरेभ्यः
।
तन्त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै
जुषन्तांविष्णवे त्वा । ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः ४२

द्याम्मा लेखीरन्तरिक्षम्मा हिꣳसीः पृथिव्या सम्भव ।
अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।
अतस्त्वन्देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ
रुहेम ४३

इति पञ्चमोऽध्यायः

# अथ षष्ठोऽध्यायः

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददे नार्यसीदमहꣳ रक्षसाङ्ग्रीवाऽअपि कृन्तामि ।
यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै
त्वा शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि १

अग्रेणीरसि स्वावेशऽउन्नेतृणामेतस्य वित्तादधि त्वा स्थास्यति
देवस्त्वा सविता मध्वानक्तु सुपिप्पलाभ्यस्त्वौषधीभ्यः ।
द्यामग्रेणास्पृक्षऽआन्तरिक्षम्मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः २

या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गाऽअयासः ।
अत्राह तदुरुगायस्य विष्णोः परमम्पदमव भारि भूरि ।
ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ।
ब्रह्म दृꣳह क्षत्रन्दृꣳहायुर्दृꣳह प्रजान्दृꣳह ३

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः
सखा ४

तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्
५

परिवीरसि परि त्वा दैवीर्विशो व्ययन्ताम्परीमँयजमानꣳ रायो
मनुष्याणाम् ।
दिवः सूनुरस्येष ते पृथिव्याँल्लोकऽआरण्यस्ते पशुः ६

उपावीरस्युप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ७

रेवती रमध्वम्बृहस्पते धारया वसूनि ।
ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि धर्षा मानुषः ८

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि ।
अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योनु सखा सयूथ्यः । अग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ९

अपाम्पेरुरस्यापो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहविः ।
सन्ते प्राणो वातेन गच्छताꣳ समङ्गानि यजत्रैः सँयज्ञपतिराशिषा १०

घृतेनाक्तौ पशूँस्त्रायेथाꣳ रेवति यजमाने प्रियन्धाऽआविश ।
उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव ।
वर्षो वर्षीयसि यज्ञे यज्ञपतिन्धाः स्वाहा देवेभ्यो देवेभ्यः स्वाहा ११

माहिर्भूर्मा पृदाकुर्नमस्तऽआतानानर्वा प्रेहि ।
घृतस्य कुल्याऽउपऽऋतस्य पथ्याऽअनु १२

देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म १३

वाचन्ते शुन्धामि प्राणन्ते शुन्धामि चक्षुस्ते शुन्धामि श्रोत्रन्ते शुन्धामि नाभिन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि चरित्राँस्ते शुन्धामि १४

मनस्तऽआप्यायताँवाक्तऽआप्यायताम्प्राणस्तऽआप्यायताञ्चक्षुस्तऽआप्यायताᳬ श्रोत्रन्तऽआप्यायताम् ।
यत्ते क्रूरँयदास्थितन्तत्तऽआप्यायतान्निष्ट्यायतान्तत्ते शुध्यतु शमहोभ्यः ।
ओषधे त्रायस्व स्वधिते मैनᳬ हिᳬसीः १५

रक्षसाम्भागोसि निरस्तᳬ रक्षऽइदमहᳬ रक्षोभि तिष्ठामीदमहᳬ रक्षोवबाधऽइदमहᳬ रक्षोधमन्तमो नयामि । घृतेन द्यावापृथिवी प्रोर्णुवाथाँवायो वे स्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृतेऽऊर्ध्वनभसम्मारुतङ्गच्छतम् १६

इदमापः प्रवहतावद्यञ्च मलञ्च यत् ।
यच्चाभिदुद्रोहानृतँयच्च शेपेऽअभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु १७

सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम् ।
रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन्वातस्य त्वा ध्राज्यै पूष्णो रᳬह्याऽऊष्मणो व्यथिषत्प्रयुतन्द्वेषः १८

घृतङ्घृतपावानः पिबत वसाँवसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिशऽआदिशो विदिशऽउद्दिशो दिग्भ्यः

स्वाहा॑ १९

ऐन्द्र॒ प्रा॒णोऽअ॒ङ्गे॑ऽअ॒ङ्गे॒ निदी॑ध्यदै॒न्द्रऽउ॑दा॒नोऽअ॒ङ्गे॑ऽअ॒ङ्गे॒ निधी॑तः ।
देव॑ त्वष्ट॒र्भूरि॑ ते॒ सꣳ स॑मेतु॒ सल॑क्ष्मा॒ यद्विषु॑रूपम्भवा॑ति ।
दे॒व॒त्रा यन्त॒मव॑से॒ सखा॒योनु॑ त्वा मा॒ता पि॒तरो॑ मदन्तु २०

स॒मु॒द्रङ्ग॑च्छ॒ स्वाहा॒न्तरि॑क्षङ्गच्छ॒ स्वाहा॑ दे॒वꣳ स॑वि॒तार॑ङ्गच्छ॒ स्वाहा॑ मि॒त्रावरु॑णौ गच्छ॒ स्वाहा॑होरा॒त्रे ग॑च्छ॒ स्वाहा॒ छन्दा॑ꣳसि गच्छ॒ स्वाहा॒ द्यावा॑पृथि॒वी ग॑च्छ॒ स्वाहा॑ य॒ज्ञङ्ग॑च्छ॒ स्वाहा॒ सोम॑ङ्गच्छ॒ स्वाहा॑ दि॒व्यन्नभो॑ गच्छ॒ स्वाहा॒ग्निं वै॑श्वान॒रङ्ग॑च्छ॒ स्वाहा॒ मनो॑ मे॒ हार्दि॑ यच्छ॒ दिव॑न्ते धू॒मो ग॑च्छतु॒ स्व॒र्ज्योति॑ः पृथि॒वीम्भस्म॒नापृ॑ण॒ स्वाहा॑ २१

मापो मौष॑धीर्हिꣳसी॒र्धाम्नो॑धाम्नो राजँ॒स्ततो॑ वरुण नो मुञ्च ।
यदा॒हुर॒घ्न्याऽइति॒ वरु॒णेति॒ शपा॑महे॒ ततो॑ वरुण नो मुञ्च ।
सु॒मि॒त्रि॒या न॒ऽआप॒ऽओष॑धयः सन्तु दु॒र्मि॒त्रि॒यास्तस्मै॑ सन्तु॒
यो॒स्मान्द्वेष्टि॒ यञ्च॑ व॒यन्द्वि॒ष्मः २२

ह॒विष्म॑तीरि॒माऽआपो॑ ह॒विष्मा॒२ँ॥ऽआवि॑वासति ।
ह॒विष्मा॑न्दे॒वोऽअ॑ध्व॒रो ह॒विष्मा॑२ँ॥ऽअस्तु॒ सूर्य॑ः २३

अ॒ग्नेर्वोप॑न्नगृहस्य॒ सद॑सि सादयामीन्द्रा॒ग्न्योर्भा॑ग॒धेयी॑ स्थ
मि॒त्रावरु॑णयोर्भा॑ग॒धेयी॑ स्थ॒ विश्वे॑षान्दे॒वाना॑म्भाग॒धेयी॑ स्थ ।
अ॒मूर्याऽउप॒ सूर्ये॒ याभि॑र्वा॒ सूर्य॑ः स॒ह । ता नो॑ हिन्वन्त्वध्व॒रम्
२४

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वमिममध्वरन्दिवि देवेषु होत्रा यच्छ २५

सोम राजन्विश्वास्त्वम्प्रजाऽउपावरोह विश्वास्त्वाम्प्रजाऽउपावरोहन्तु ।
शृणोत्वग्निः समिधा हवम्मे शृण्वन्त्वापो धिषणाश्च देवीः ।
श्रोता ग्रावाणो विदुषो न यज्ञꣳ शृणोतु देवः सविता हवम्मे स्वाहा २६

देवीरापोऽअपान्नपाद्यो वऽऊर्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ।
तन्देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषाम्भाग स्थ स्वाहा २७

कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि ।
समापोऽअद्भिरग्मत समोषधीभिरोषधीः २८

यमग्ने पृत्सु मर्त्यमवा वाजेषु यञ्जुनाः ।
स यन्ता शश्वतीरिषः स्वाहा २९

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददे रावासि गभीरमिममध्वरङ्कृधीन्द्राय सुषूतमम् ।
उत्तमेन पविनोर्जस्वन्तम्मधुमन्तम्पयस्वन्तन्निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे ३०

मनो मे तर्पयत वाचम्मे तर्पयत प्राणम्मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रम्मे तर्पयतात्मानम्मे तर्पयत प्रजाम्मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन् ३१

इन्द्राय त्वा वसुमते रुद्रवतऽइन्द्राय त्वादित्यवतऽइन्द्राय त्वाभिमातिघ्ने ।
श्येनाय त्वा सोमभृतेग्नये त्वा रायस्पोषदे ३२

यत्ते सोम दिवि ज्योतिर्यत्पृथिव्याँयदुरावन्तरिक्षे ।
तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ३३

श्वात्रा स्थ वृत्रतुरो राधोगूर्ताऽअमृतस्य पत्नीः ।
ता देवीर्देवत्रेमँयज्ञन्नयतोपहूताः सोमस्य पिबत ३४

मा भेर्मा सँविक्थाऽऊर्जन्धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जन्दधाथाम् । पाप्मा हतो न सोमः ३५

प्रागपागुदगधराक्सर्वतस्त्वा दिशऽआधावन्तु । अम्ब निष्पर समरीर्विदाम् ३६

त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ३७

इति षष्ठोऽध्यायः

# अथ सप्तमोऽध्यायः

वाचस्पतये पवस्व वृष्णोऽअꣳशुभ्याङ्गभस्तिपूतः ।
देवो देवेभ्यः पवस्व येषाम्भागोसि १

मधुमतीर्नऽइषस्कृधि यत्ते सोमादाभ्यन्नाम जागृवि तस्मै ते सोम
सोमाय स्वाहा स्वाहोर्वन्तरिक्षमन्वेमि स्वाङ्कृतोसि २

स्वाङ्कृतोसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु
स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यो देवाꣳशो
यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोसौ फट्प्राणाय त्वा व्यानाय
त्वा ३

उपयामगृहीतोस्यन्तर्यच्छ मघवन्पाहि सोमम् ।
उरुष्य रायऽएषो यजस्व ४

अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षम् ।
सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ५

स्वाङ्कृतोसि विश्वेभ्यऽइन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु
स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यऽउदानाय त्वा
६

आ वायो भूष शुचिपाऽउप नः सहस्रन्ते नियुतो विश्ववार ।
उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयँवायवे त्वा ७

इन्द्रवायूऽइमे सुताऽउप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि ।
उपयामगृहीतोसि वायवऽइन्द्रवायुभ्यान्त्वैष ते योनिः
सजोषोभ्यान्त्वा ८

अयँवाम्मित्रावरुणा सुतः सोमऽऋतावृधा । ममेदिह श्रुतꣳ हवम्
।
उपयामगृहीतोसि मित्रावरुणाभ्यान्त्वा ९

राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः ।
तान्धेनुम्मित्रावरुणा युवन्नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते
योनिर्ऋतायुभ्यान्त्वा १०

या वाङ्कशा मधुमत्यश्विना सूनृतावती ।
तया यज्ञम्मिमिक्षतम् । उपयामगृहीतोस्यश्विभ्यान्त्वैष ते
योनिर्माध्वीभ्यान्त्वा ११

तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् ।
प्रतीचीनँवृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्धसे ।
उपयामगृहीतोसि शण्डाय त्वैष ते योनिर्वीरताम्पाह्यपमृष्टः शण्डो
देवास्त्वा शुक्रपाः प्रणयन्त्वनाधृष्टासि १२

सुवीरो वीरान्प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् ।
सञ्जग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा निरस्तः शण्डः
शुक्रस्याधिष्ठानमसि १३

अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ।

सा प्रथमा सँस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽअग्निः १४

स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्माऽइन्द्राय सुतमा जुहोत स्वाहा ।
तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता
यत्स्वाहायाडग्नीत् १५

अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाᳬ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ।
उपयामगृहीतोसि मर्काय त्वा १६

मनो न येषु हवनेषु तिग्मँविपः शच्या वनुथो द्रवन्ता ।
आ यः शर्याभिस्तुविनृम्णोऽअस्याश्रीणीतादिशङ्गभस्तावेष ते योनिः
प्रजाः पाह्यपमृष्टो मर्को देवास्त्वा मन्थिपाः प्रणयन्त्वनाधृष्टासि
१७

सुप्रजाः प्रजाः प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् ।
सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा निरस्तो मर्को
मन्थिनोधिष्ठानमसि १८

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमञ्जुषध्वम् १९

उपयामगृहीतोस्याग्रयणोसि स्वाग्रयणः । पाहि यज्ञम्पाहि
यज्ञपतिँविष्णुस्त्वामिन्द्रियेण पातु विष्णुन्त्वम्पाह्यभि सवनानि पाहि
२०

सोमः पवते सोमः पवतेस्मै ब्रह्मणेस्मै क्षत्रायास्मै सुन्वते
यजमानाय पवतऽइषऽऊर्जे पवतेद्भ्यऽओषधीभ्यः पवते
द्यावापृथिवीभ्याम्पवते सुभूताय पवते विश्वेभ्यस्त्वा देवेभ्यऽएष ते
योनिर्विश्वेभ्यस्त्वा देवेभ्यः २१

उपयामगृहीतोसीन्द्राय त्वा बृहद्वते वयस्वतऽउक्थाव्यङ्गृह्णामि ।
यत्तऽइन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरुक्थेभ्यस्त्वा
देवेभ्यस्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामि मित्रावरुणाभ्यान्त्वा २२

मित्रावरुणाभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामीन्द्राय त्वा
देवाव्यँयज्ञस्यायुषे गृह्णामीन्द्राग्निभ्यान्त्वा देवाव्यँयज्ञस्यायुषे
गृह्णामीन्द्रावरुणाभ्यान्त्वा देवाव्यँयज्ञस्यायुषे
गृह्णामीन्द्राबृहस्पतिभ्यान्त्वा देवाव्यँयज्ञस्यायुषे
गृह्णामीन्द्राविष्णुभ्यान्त्वा देवाव्यँयज्ञस्यायुषे गृह्णामि २३

मूर्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआजातमग्निम् ।
कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः २४

उपयामगृहीतोसि ध्रुवोसि
ध्रुवक्षितिर्ध्रुवाणान्ध्रुवतमोच्युतानामच्युतक्षित्तमऽएष ते
योनिर्वैश्वानराय त्वा ।
ध्रुवन्ध्रुवेण मनसा वाचा सोममवनयामि ।
अथा नऽइन्द्रऽइद्विशोसपत्नाः समनसस्करत् २५

यस्ते द्रप्स स्कन्दति यस्तेऽअꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् ।
अध्वर्योर्वा परि वा यः पवित्रात्तन्ते जुहोमि मनसा वषट्कृतꣳ

स्वाहा देवानामुत्क्रमणमसि २६

प्राणाय मे वर्चोदा वर्चसे पवस्व व्यानाय मे वर्चोदा वर्चसे पवस्वोदानाय मे वर्चोदा वर्चसे पवस्व वाचे मे वर्चोदा वर्चसे पवस्व क्रतूदक्षाभ्याम्मे वर्चोदा वर्चसे पवस्व श्रोत्राय मे वर्चोदा वर्चसे पवस्व चक्षुर्भ्याम्मे वर्चोदसौ वर्चसे पवेथामात्मने मे २७

आत्मने मे वर्चोदा वर्चसे पवस्वौजसे मे वर्चोदा वर्चसे पवस्वायुषे मे वर्चोदा वर्चसे पवस्व विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् २८

कोसि कतमोसि कस्यासि को नामासि ।
यस्य ते नामामन्महि यन्त्वा सोमेनातीतृपाम ।
भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याँ सुवीरो वीरैः सुपोषः पोषैः २९

उपयामगृहीतोसि मधवे त्वोपयामगृहीतोसि माधवाय त्वोपयामगृहीतोसि शुक्राय त्वोपयामगृहीतोसि शुचये त्वोपयामगृहीतोसि नभसे त्वोपयामगृहीतोसि नभस्याय त्वोपयामगृहीतोसीषे त्वोपयामगृहीतोस्यूर्जे त्वोपयामगृहीतोसि सहसे त्वोपयामगृहीतोसि सहस्याय त्वोपयामगृहीतोसि तपसे त्वोपयामगृहीतोसि तपस्याय त्वोपयामगृहीतोस्यꣳहसस्पतये त्वा ३०

इन्द्राग्नी आगतꣳ सुतङ्गीर्भिर्नभो वरेण्यम् । अस्य पातन्धियेषिता ।

उपयामगृंहीतोसीन्द्राग्निभ्यान्त्वैष ते योनिरिन्द्राग्निभ्यान्त्वा ३१

आ घा येऽअग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ।
उपयामगृंहीतोस्यग्नीन्द्राभ्यान्त्वैष ते योनिरग्नीन्द्राभ्यान्त्वा ३२

ओमासश्चर्षणीधृतो विश्वे देवासऽआगत ।
दाश्वाꣳसो दाशुषः सुतम् ।
उपयामगृंहीतोसि विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ३३

विश्वे देवासऽआगत शृणुता मऽइमꣳ हवम् ।
एदम्बर्हिर्निषीदत ।
उपयामगृंहीतोसि विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ३४

इन्द्र मरुत्वऽइह पाहि सोमँयथा शार्यातेऽअपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्नाविवासन्ति कवयः सुयज्ञाः ।
उपयामगृंहीतोसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते ३५

मरुत्वन्तँवृषभँवावृधानमकवारिन्दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ।
उपयामगृंहीतोसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते ।
उपयामगृंहीतोसि मरुतान्त्वौजसे ३६

सुजोषाऽइन्द्र सगणो मुरुद्भिः सोमम्पिब वृत्रहा शूर विद्वान् ।
जहि शत्रूँ॥रप मृधो नुदस्वाथाभयङ्कृणुहि विश्वतो नः ।
उपयामगृहीतोसीन्द्राय त्वा मुरुत्वतऽएष ते योनिरिन्द्राय त्वा मुरुत्वते ३७

मुरुत्वाँ॥ऽइन्द्र वृषुभो रणाय पिबा सोममनुष्वधम्मदाय ।
आसिञ्चस्व जठरे मध्वऽऊर्मिन्त्वꣳ राजासि प्रतिपत्सुतानाम् ।
उपयामगृहीतोसीन्द्राय त्वा मुरुत्वतऽएष ते योनिरिन्द्राय त्वा मुरुत्वते ३८

महाँ॥ऽइन्द्रो नृवदाचर्षणिप्राऽउत द्विबर्हाऽअमिनः सहोभिः ।
अस्मुद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।
उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ३९

महाँ॥ऽइन्द्रो यऽओजसा पुर्जन्यो वृष्टिमाँ॥ऽइव । स्तोमैर्वत्सस्य वावृधे ।
उपयामगृहीतोसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ४०

उदु त्यञ्जातवेदसन्देवँवहन्ति केतवः ।
दृशे विश्वाय सूर्यꣳ स्वाहा ४१

चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्यऽआत्मा जगतस्तस्थुषश्च स्वाहा ४२

अग्ने नयं सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिँविधेम स्वाहा ४३

अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधः पुरऽएतु प्रभिन्दन् ।
अयँवाजाञ्जयतु वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ४४

रूपेण वो रूपमभ्यागान्तुथो वो विश्ववेदा विभजतु ।
ऋतस्य पथा प्रेत चन्द्रदक्षिणा विस्वः पश्य व्यन्तरिक्षँयतस्व सदस्यैः ४५

ब्राह्मणमद्य विदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ।
अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ४६

अग्नये त्वा मह्यँवरुणो ददातु सोमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यम्प्रतिग्रहीत्रे रुद्राय त्वा मह्यँवरुणो ददातु सोमृतत्वमशीय प्राणो दात्रऽएधि वयो मह्यम्प्रतिग्रहीत्रे बृहस्पतये त्वा मह्यँवरुणो ददातु सोमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यम्प्रतिग्रहीत्रे यमाय त्वा मह्यँवरुणो ददातु सोमृतत्वमशीय हयो दात्रऽएधि वयो मह्यम्प्रतिग्रहीत्रे ४७

कोदात्कस्माऽअदात्कामोदात्कामायादात् ।
कामो दाता कामः प्रतिग्रहीता कामैतत्ते ४८

इति सप्तमोऽध्यायः

# अथाष्टमोऽध्यायः

उपयामगृहीतोस्यादित्येभ्यस्त्वा ।
विष्णऽउरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् १

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यतऽआदित्येभ्यस्त्वा २

कदा चन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनन्तऽइन्द्रियमातस्थावमृतन्दिव्यादित्येभ्यस्त्वा ३

यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या
वरिवोवित्तरासदादित्येभ्यस्त्वा ४

विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व ।
श्रदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः ।
पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहारपऽएधते गृहे ५

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ६

उपयामगृहीतोसि सावित्रोसि चनोधाश्चनोधाऽअसि चनो मयि धेहि
।
जिन्व यज्ञञ्जिन्व यज्ञपतिम्भगाय देवाय त्वा सवित्रे ७

उपयामगृहीतोसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः ।
विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ८

उपयामगृहीतोसि बृहस्पतिसुतस्य देव सोम तऽइन्दोरिन्द्रियावतः
पत्नीवतो ग्रहाँ॥ऽऋध्यासम् ।
अहम्परस्तादहमवस्ताद्यदन्तरिक्षन्तदु मे पिताभूत् ।
अहꣳ सूर्यमुभयतो ददर्शाहन्देवानाम्परमङ्गुहा यत् ९

अग्ना३॥ऽइ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमम्पिब स्वाहा ।
प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो
रेतोधामशीय १०

उपयामगृहीतोसि हरिरसि हारियोजनो हरिभ्यान्त्वा ।
हर्योर्धाना स्थ सहसोमाऽइन्द्राय ११

यस्तेऽअश्वसनिर्भक्षो यो गोसनिस्तस्य तऽइष्टयजुषस्तुतस्तोमस्य
शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि १२

देवकृतस्यैनसोवयजनमसि मनुष्यकृतस्यैनसोवयजनमसि
पितृकृतस्यैनसोवयजनमस्यात्मकृतस्यैनसोवयजनमस्येनसऽएनसोव
यजनमसि ।
यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोवयजनमसि
१३

सँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् १४

समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सम्ब्रह्मणा देवकृतँयदस्ति सन्देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा
१५

सँवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोनुमार्ष्टु तन्वो यद्विलिष्टम् १६

धाता रातिः सवितेदञ्जुषन्ताम्प्रजापतिर्निधिपा देवोऽअग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणा यजमानाय द्रविणन्दधात स्वाहा
१७

सुगा वो देवाः सदनाऽअकर्म यऽआजग्मेदꣳ सवनञ्जुषाणाः ।
भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा १८

याँ२॥ऽआवहऽउशतो देव देवाँस्तान्प्रेरय स्वेऽअग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेसुङ्घर्मꣳ स्वरातिष्ठतानु स्वाहा
१९

वयꣳ हि त्वा प्रयति यज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाऽऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहा २०

देवा गातुविदो गातुँवित्त्वा गातुमित ।
मनसस्पतऽइमन्देव यज्ञꣳ स्वाहा वाते धाः २१

यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वाँयोनिङ्गच्छ स्वाहा ।

एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा २२

माहिर्भूर्मा पृदाकुः । उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाऽउ ।
अपदे पादा प्रतिधातवेकरुतापवक्ता हृदयाविधश्चित् ।
नमो वरुणायाभिष्ठितो वरुणस्य पाशः २३

अग्नेरनीकमपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्यम् ।
दमेदमे समिधँयक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा २४

समुद्रे ते हृदयमप्स्वन्तः सन्त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा २५

देवीरापऽएष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतम्बिभृत ।
देव सोमैष ते लोकस्तस्मिञ्छञ्च वक्ष्व परि च वक्ष्व २६

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोयासिषमव मर्त्यैर्मर्त्यकृतम्पुरुराव्णो देव रिषस्पाहि । देवानाꣳ समिदसि २७

एजतु दशमास्यो गर्भो जरायुणा सह ।
यथायँवायुरेजति यथा समुद्रऽएजति ।
एवायन्दशमास्योऽअस्रज्जरायुणा सह २८

यस्यै ते यज्ञियो गर्भो यस्यै योनिर्हिरण्ययी ।
अङ्गान्यह्रुता यस्य तम्मात्रा समजीगमꣳ स्वाहा २९

पुरुदस्मो विषुरूपऽइन्दुरन्तर्महिमानमानञ्ज धीरः ।
एकपदीन्द्विपदीन्त्रिपदीञ्चतुष्पदीमष्टापदीम्भुवनानु प्रथन्ताᳪ स्वाहा
३०

मरुतो यस्य हि क्षये पाथा दिवो विमहसः ।
स सुगोपातमो जनः ३१

मही द्यौः पृथिवी च नऽइमँयज्ञम्मिमिक्षताम् ।
पिपृतान्नो भरीमभिः ३२

आतिष्ठ वृत्रहन्रथँयुक्ता ते ब्रह्मणा हरी ।
अर्वाचीनᳫ सु ते मनो ग्रावा कृणोतु वग्नुना ।
उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा
षोडशिने ३३

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा नऽइन्द्र सोमपा गिरामुपश्रुतिञ्चर ।
उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा
षोडशिने ३४

इन्द्रमिद्धरी वहतोप्रतिधृष्टशवसम् । ऋषीणाञ्च स्तुतीरुप यज्ञञ्च
मानुषाणाम् । उपयामगृहीतोसीन्द्राय त्वा षोडशिनऽएष ते
योनिरिन्द्राय त्वा षोडशिने ३५

यस्मान्न जातः परोऽअन्योऽअस्ति यऽआविवेश भुवनानि विश्वा ।

प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ३६

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षञ्चक्रतुरग्रऽएतम् ।
तयोरहमनु भक्षम्भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहा ३७

अग्ने पवस्व स्वपाऽअस्मे वर्चः सुवीर्यम् ।
दधद्रयिम्मयि पोषम् ।
उपयामगृहीतोस्यग्नये त्वा वर्चसऽएष ते योनिरग्नये त्वा वर्चसे ।
अग्ने वर्चस्विन्वर्चस्वाँस्त्वन्देवेष्वसि वर्चस्वानहम्मनुष्येषु भूयासम् ३८

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रेऽअवेपयः ।
सोममिन्द्र चमूसुतम् ।
उपयामगृहीतोसीन्द्राय त्वौजसऽएष ते योनिरिन्द्राय त्वौजसे ।
इन्द्रौजिष्ठौजिष्ठस्त्वन्देवेष्वस्योजिष्ठोहम्मनुष्येषु भूयासम् ३९

अदृश्रमस्य केतवो वि रश्मयो जनाꣳ॥ऽअनु ।
भ्राजन्तोऽअग्नयो यथा ।
उपयामगृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ।
सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वन्देवेष्वसि भ्राजिष्ठोहम्मनुष्येषु भूयासम् ४०

उदु त्यञ्जातवेदसन्देवँवहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ।

उपयामगृहीतोसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय ४१
आजिघ्र कलशम्मह्या त्वा विशन्त्विन्दवः ।
पुनरूर्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती
पुनर्माविशताद्रयिः ४२

इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेदिति सरस्वति महि विश्रुति ।
एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतम्ब्रूतात् ४३

वि नऽइन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
योऽअस्माँ॥ऽअभिदासत्यधरङ्गमया तमः ।
उपयामगृहीतोसीन्द्राय त्वा विमृधऽएष ते योनिरिन्द्राय त्वा विमृधे
४४

वाचस्पतिँविश्वकर्माणमूतये मनोजुवँवाजेऽअद्या हुवेम ।
स नो विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ।
उपयामगृहीतोसीन्द्राय त्वा विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा
विश्वकर्मणे ४५

विश्वकर्मन्हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् ।
उपयामगृहीतोसीन्द्राय त्वा विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा
विश्वकर्मणे ४६

उपयामगृहीतोस्यग्नये त्वा गायत्रच्छन्दसङ्गृह्णामीन्द्राय त्वा
त्रिष्टुप्छन्दसङ्गृह्णामि विश्वेभ्यस्त्वा देवेभ्यो

जगच्छन्दसङ्गृह्णाम्यनुष्टुप्तेभिगरः ४७

व्रेशीनान्त्वा पत्मन्नाधूनोमि कुकूननानान्त्वा पत्मन्नाधूनोमि
भन्दनानान्त्वा पत्मन्नाधूनोमि मदिन्तमानान्त्वा पत्मन्नाधूनोमि
मधुन्तमानान्त्वा पत्मन्नाधूनोमि शुक्रन्त्वा शुक्रऽआधूनोम्यह्नो रूपे
सूर्यस्य रश्मिषु ४८

ककुभꣳ रूपँवृषभस्य रोचते बृहच्छुक्रः शुक्रस्य पुरोगाः सोमꣳ
सोमस्य पुरोगाः ।
यत्ते सोमादाभ्यन्नाम जागृवि तस्मै त्वा गृह्णामि तस्मै ते सोम
सोमाय स्वाहा ४९

उशिक्त्वन्देव सोमाग्नेः प्रियम्पाथोपीहि वशी त्वन्देव सोमेन्द्रस्य
प्रियम्पाथोपीह्यस्मत्सखा त्वन्देव सोम
विश्वेषान्देवानाम्प्रियम्पाथोपीहि ५०

इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिꣳ स्वाहा ।
उपसृजन्धरुणम्मात्रे धरुणो मातरन्धयन् ।
रायस्पोषमस्मासु दीधरत्स्वाहा ५१

सत्रस्यऽऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम ।
दिवम्पृथिव्याऽअध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः ५२

युवन्तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तन्तमिद्धतँवज्रेण
तन्तमिद्धतम् ।
दूरे चत्ताय च्छन्त्सद्गहनँयदिनक्षत् ।

अ॒स्माकꣳ॒ शत्रू॒न्परि॑ शूर वि॒श्वतो॑ द॒र्मा द॑र्षीष्ट वि॒श्वत॑ः ।
भूर्भुव॒ः स्व॒ः सु॒प्र॒जाः प्र॒जाभि॑ः स्याम सु॒वीरा॑ वी॒रैः सु॒पो॒षाः॒ पोषै॑ः
५३

प॒र॒मे॒ष्ठ्य॒भिधी॑तः प्र॒जाप॑तिर्वा॒चि व्याहृ॑ताया॒मन्धो॒ऽअच्छे॑तः
स॒वि॒ता स॒न्यां॑वि॒श्वक॑र्मा दी॒क्षाया॑म्पू॒षा सो॑म॒क्रय॑ण्या॒मिन्द्र॑श्च ५४

इन्द्र॑श्च म॒रुत॑श्च क्र॒याया॒पोत्थि॒तोसु॑रः प॒ण्यमा॑नो मि॒त्रः क्री॒तो विष्णु॑ः
शिपिवि॒ष्टऽऊ॒रावास॑न्नो॒ विष्णु॑र्न॒रन्धि॑षः प्रो॒ह्यमा॑णः॒ सोम॑ः ५५

प्रो॒ह्यमा॑णः॒ सोम॒ऽआग॑तो॒ वरु॑णऽआस॒न्द्यामास॑न्नो॒ग्निराग्नी॑ध्र॒ऽइन्द्रो॑
ह॒वि॒र्धाने॒थर्वो॑पावह्रि॒यमा॑णो॒ विश्वे॑ दे॒वाः ५६

विश्वे॑ दे॒वाऽअꣳ॒शु॒षु न्यु॒प्तो॒ विष्णु॑राप्रीत॒पाऽआ॑प्या॒य्यमा॑नो॒ य॒मः
सू॒यमा॑नो॒ विष्णु॑ः सम्भ्रि॒यमा॑णो॒ वा॒युः पू॒यमा॑नः शु॒क्रः पू॒तः
शु॒क्रः क्षी॑र॒श्रीर्म॒न्थी स॑क्तु॒श्रीर्विश्वे॑ दे॒वाः ५७

विश्वे॑ दे॒वाश्च॑म॒सेषून्नी॒तोसु॒र्होमा॒योद्य॑तो॒ रु॒द्रो हू॒यमा॑नो॒ वा॒तो॒भ्यावृ॑त्तो
नृ॒च॒क्षाः॒ प्रति॑ख्यातो॒ भ॒क्षो भ॒क्ष्यमा॑णः पि॒तरो॑ नाराशꣳ॒साः स॒न्नः
सि॒न्धु॑ः ५८

स॒न्नः सि॒न्धु॑रवभृ॒थायोद्य॑तः सम॒द्रो॒भ्यवह्रि॒यमा॑णः स॒लि॒लः
प्रप्लु॑तो॒
ययो॒रोज॑सा स्कभि॒ता रजा॑ꣳसि वी॒र्ये॒भिर्वी॒रत॑मा॒ शवि॑ष्ठा ।
या पत्ये॑ते॒ऽअप्र॑तीता॒ सहो॑भि॒र्विष्णू॑ऽअग॒न्वरु॑णा पू॒र्वहू॑तौ ५९

देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो
मा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यङ्कञ्च
लोकमगन्यज्ञस्ततो मे भद्रमभूत् ६०

चतुस्त्रिꣳशत्तन्तवो ये वितत्निरे यऽइमँयज्ञꣳ स्वधया ददन्ते ।
तेषाञ्छिन्नꣳ सम्वेतद्दधामि स्वाहा घर्मोऽअप्येतु देवान् ६१

यज्ञस्य दोहो विततः पुरुत्रा सोऽअष्टधा दिवमन्वाततान ।
स यज्ञ धुक्ष्व महि मे प्रजायाꣳ रायस्पोषँविश्वमायुरशीय स्वाहा
६२

आपवस्व हिरण्यवदश्ववत्सोम वीरवत् ।
वाजङ्गोमन्तमाभर स्वाहा ६३

इत्यष्टमोऽध्यायः

# अथ नवमोऽध्यायः

देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिम्भगाय ।
दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाजन्नः स्वदतु
स्वाहा १

ध्रुवसदन्त्वा नृषदम्मनःसदमुपयामगृहीतोसीन्द्राय त्वा
जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
अप्सुषदन्त्वा घृतसदँव्योमसदमुपयामगृहीतोसीन्द्राय त्वा
जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
पृथिविसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसदमुपयामगृहीतो
सीन्द्राय त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् २

अपाँ रसमुद्वयसꣳ सूर्ये सन्तꣳ समाहितम् ।
अपाँ रसस्य यो रसस्तँवो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्राय त्वा
जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ३

ग्रहाऽऊर्जाहुतयो व्यन्तो विप्राय मतिम् ।
तेषाँविशिप्रियाणाँवोहमिषमूर्जꣳ समग्रभमुपयामगृहीतोसीन्द्राय त्वा
जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ।
सम्पृचौ स्थः सम्मा भद्रेण पृङ्क्तँविपृचौ स्थो वि मा पाप्मना पृङ्क्तम्
४

इन्द्रस्य वज्रोसि वाजसास्त्वयायँवाजꣳ सेत् ।
वाजस्य नु प्रसवे मातरम्महीमदितिन्नाम वचसा करामहे ।
यस्यामिदँविश्वम्भुवनमाविवेश तस्यान्नो देवः सविता धर्म साविषत्

५

अ॒प्स्व॒न्तर॒मृत॑म॒प्सु भे॑ष॒जम॒पामु॒त प्रश॑स्ति॒ष्वश्वा॑ भव॑त वा॒जिन॑ः ।
देवी॑रापो॒ यो व॑ऽऊ॒र्मिः प्र॒तूर्तिः क॒कुन्मा॑न्वाज॒सास्तेना॒यँ॒वाज॑ꣳ सेत्
६

वातो॑ वा॒ मनो॑ वा गन्ध॒र्वाः स॒प्तवि॑ꣳशतिः ।
तेऽअग्रेऽश्व॑मयु॒ञ्जँ॒स्तेऽअ॑स्मिञ्ज॒वमाद॑धुः ७

वात॑रꣳहा भव वाजिन्यु॒ज्यमा॑न॒ऽइन्द्र॑स्येव॒ दक्षि॑णः श्रि॒यैधि॑ ।
यु॒ञ्जन्तु॑ त्वा म॒रुतो॑ वि॒श्ववे॑दस॒ऽआ ते॒ त्वष्टा॑ प॒त्सु ज॒वन्द॑धातु ८

ज॒वो यस्ते॑ वाजि॒न्निहि॑तो॒ गुहा॒ यः श्ये॒ने परी॑त्तो॒ऽअच॑रच्च॒ वाते॑ ।
तेन॑ नो वाजि॒न्बल॑वा॒न्बले॑न वाज॒जिच्च॒ भव॒ सम॑ने च पारयि॒ष्णुः।
वाजि॑नो वाजजितो॒ वाज॑ꣳ सरि॒ष्यन्तो॒ बृह॒स्पते॑र्भा॒गमव॑जिघ्रत ९

दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यस॑वसो॒ बृह॒स्पते॑रुत्त॒मन्नाक॑ꣳ रुहेयम् ।
दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यस॑वस॒ऽइन्द्र॑स्योत्त॒मन्नाक॑ꣳ रुहेयम् ।
दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यप्र॑सवसो॒ बृह॒स्पते॑रुत्त॒मन्नाक॑मरुहम् ।
दे॒वस्या॒हꣳ स॑वि॒तुः स॒वे स॒त्यप्र॑सवस॒ऽइन्द्र॑स्योत्त॒मन्नाक॑मरुहम् १०

बृह॑स्पते॒ वाज॑ञ्जय॒ बृह॒स्पत॑ये॒ वाच॑ँ॒वदत॒ बृह॒स्पति॒ँ॒वाज॑ञ्जापयत ।
इन्द्र॒ वाज॑ञ्जयेन्द्रा॑य॒ वाच॑ँ॒वदतेन्द्र॒ँ॒वाज॑ञ्जापयत ११

ए॒षा वः॒ सा स॒त्या स॒ँ॒वाग॑भूद्यया॒ बृह॒स्पति॒ँ॒वाज॒मजी॑जपता॒जी॑जपत॒
बृह॒स्पति॒ँ॒वाज॒ँ॒वन॑स्पतयो॒ विमु॑च्यध्वम् ।

एषा वः सा सत्या
सँवागभूद्ययेन्द्रँवाजमजीजपताजीजपतेन्द्रँवाजँवनस्पतयो
विमुच्यध्वम् १२

देवस्याहँ सवितुः सवे सत्यप्रसवसो बृहस्पतेर्वाजजितो
वाजञ्जेषम् ।
वाजिनो वाजजितोध्वन स्कभ्नुवन्तो योजना मिमानाः काष्ठाङ्गच्छत
१३

एष स्य वाजी क्षिपणिन्तुरण्यति ग्रीवायाम्बद्धोऽअपिकक्षऽआसनि
।
क्रतुन्दधिक्राऽअनु सँसनिष्यदत्पथामङ्काँस्यन्वापनीफणत्स्वाहा
१४

उत स्मास्य द्रवतस्तुरण्यतः पर्णन्न वेरनुवाति प्रगर्धिनः ।
श्येनस्येव ध्रजतोऽअङ्कसम्परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा
१५

शन्नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोहिँवृकँ रक्षाँसि सनेम्यस्मद्युयवन्नमीवाः १६

ते नोऽअर्वन्तो हवनश्रुतो हवँविश्वे शृण्वन्तु वाजिनो मितद्रवः ।
सहस्रसा मेधसाता सनिष्यवो महो ये धनँ समिथेषु जभ्रिरे १७

वाजेवाजेवत वाजिनो नो धनेषु विप्राऽअमृताऽऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वन्तृप्ता यात पथिभिर्देवयानैः १८

आ मा वाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे ।
आ मा गन्तामिपतरा मातरा चा मा सोमोऽअमृतत्वेन गम्यात् ।
वाजिनो वाजजितो वाजꣳ ससृवाꣳसो बृहस्पतेर्भागमवजिघ्रत
निमृजानाः १९

आपये स्वाहा स्वापये स्वाहापिजाय स्वाहा क्रतवे स्वाहा वसवे
स्वाहाहर्पतये स्वाहाह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय
स्वाहा विनꣳशिनऽआन्त्यायनाय स्वाहान्त्याय भौवनाय स्वाहा
भुवनस्य पतये स्वाहाधिपतये स्वाहा २०

आयुर्यज्ञेन कल्पताम्प्राणो यज्ञेन कल्पताञ्चक्षुर्यज्ञेन कल्पताꣳ
श्रोत्रँयज्ञेन कल्पताम्पृष्ठँयज्ञेन कल्पताँयज्ञो यज्ञेन कल्पताम् ।
प्रजापतेः प्रजाऽअभूम स्वर्देवाऽअगन्मामृताऽअभूम २१

अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चाꣳसि सन्तु वः
।
नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्याऽइयन्ते राड्
यन्तासि यमनो ध्रुवोसि धरुणः । कृष्यै त्वा क्षेमाय त्वा रय्यै
त्वा पोषाय त्वा २२

वाजस्येमम्प्रसवः सुषुवेग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ताऽअस्मभ्यम्मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा
२३

वाजस्येमाम्प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।

अदित्सन्तन्दापयति प्रजानन्स नो रयिꣳ सर्ववीरन्नियच्छतु स्वाहा
२४

वाजस्य नु प्रसवऽआबभूवेमा च विश्वा भुवनानि सर्वतः ।
सनेमि राजा परियाति विद्वान्प्रजाम्पुष्टिँवर्धयमानोऽअस्मे स्वाहा
२५

सोमꣳ राजानमवसेग्निमन्वारभामहे । आदित्यान्विष्णुꣳ
सूर्यम्ब्रह्माणञ्च बृहस्पतिꣳ स्वाहा २६

अर्यमणम्बृहस्पतिमिन्द्रन्दानाय चोदय ।
वाचँविष्णुꣳ सरस्वतीꣳ सवितारञ्च वाजिनꣳ स्वाहा २७

अग्नेऽअच्छा वदेह नः प्रति नः सुमना भव ।
प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदाऽअसि स्वाहा २८

प्र नो यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः ।
प्र वाग्देवी ददातु नः स्वाहा २९

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
सरस्वत्यै वाचो यन्तुर्यन्त्रियै दधामि बृहस्पतेष्ट्वा
साम्राज्येनाभिषिञ्चाम्यसौ ३०

अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो
मनुष्यानुदजयतान्तानुज्जेषँविष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषꣳ
सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्तानुज्जेषम्पूषा पञ्चाक्षरेण ३१

पूषा पञ्चाक्षरेण पञ्च दिशऽउदजयत्ताऽउज्जेषꣳ सविता षडक्षरेण
षडृतूनुदजयत्तानुज्जेषम्मरुतः सप्ताक्षरेण सप्त
ग्राम्यान्पशूनुदजयँस्तानुज्जेषम्बृहस्पतिरष्टाक्षरेण
गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्षरेण ३२

मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत्तमुज्जेषँवरुणो दशाक्षरेण
विराजमुदजयत्तामुज्जेषमिन्द्रऽएकादशाक्षरेण
त्रिष्टुभमुदजयत्तामुज्जेषँविश्वे देवा द्वादशाक्षरेण
जगतीमुदजयँस्तामुज्जेषँवसवस्त्रयोदशाक्षरेण ३३

वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयँस्तमुज्जेषꣳ
रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳ स्तोममुदजयँस्तमुज्जेषमादित्याः
पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयँस्तमुज्जेषमदितिः षोडशाक्षरेण
षोडशꣳ स्तोममुदजयत्तमुज्जेषम्प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ
स्तोममुदजयत्तमुज्जेषम् ३४

एष ते निर्ऋते भागस्तञ्जुषस्व स्वाहाग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः
स्वाहा
यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा विश्वदेवनेत्रेभ्यो देवेभ्यः
पश्चात्सद्भ्यः स्वाहा मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा
देवेभ्यऽउत्तरासद्भ्यः स्वाहा सोमनेत्रेभ्यो देवेभ्यऽउपरिसद्भ्यो
दुवस्वद्भ्यः स्वाहा ३५

ये देवाऽअग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा
दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः

स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः
स्वाहा ये देवाः सोमनेत्राऽउपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा ३६

अग्ने सहस्व पृतनाऽअभिमातीरपास्य ।
दुष्टरस्तरन्नरातीर्वर्चोधा यज्ञवाहसि ३७

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
उपाꣳशोर्वीर्येण जुहोमि हतꣳ रक्षः स्वाहा रक्षसान्त्वा
वधायावधिष्म रक्षोवधिष्मामुमसौ हतः ३८

सविता त्वा सवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम्
।
बृहस्पतिर्वाचऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो
धर्मपतीनाम् ३९

इमन्देवाऽअसपत्नꣳ सुवध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते
जानराज्यायेन्द्रस्येन्द्रियाय ।
इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोमी राजा
सोमोस्माकम्ब्राह्मणानाꣳ राजा ४०

इति नवमोऽध्यायः

## दशमोऽध्यायः

अपो देवा मधुमतीरगृभ्णन्नूर्जस्वती राजस्वश्चितानाः ।
याभिर्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः १

वृष्णाऽऊर्मिरसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा वृष्णाऽऊर्मिरसि राष्ट्रदा
राष्ट्रममुष्मै देहि वृषसेनोसि राष्ट्रदा राष्ट्रम्मे देहि स्वाहा
वृषसेनोसि राष्ट्रदा राष्ट्रममुष्मै देह्यर्थेत स्थ २

अर्थेत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्रममुष्मै
दत्तौजस्वती स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्तापः परिवाहिणी स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहापः
परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापाम्पतिरसि राष्ट्रदा राष्ट्रम्मे
देहि स्वाहापाम्पतिरसि राष्ट्रदा राष्ट्रममुष्मै देह्यपाङ्गर्भोसि राष्ट्रदा
राष्ट्रम्मे देहि स्वाहापाङ्गर्भोसि राष्ट्रदा राष्ट्रममुष्मै देहि सूर्यत्वचस
स्थ ३

सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्त सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त मान्दा स्थ राष्ट्रदा राष्ट्रम्मे दत्त
स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त व्रजक्षित स्थ राष्ट्रदा
राष्ट्रम्मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त वाशा स्थ
राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त
शविष्ठा स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा
राष्ट्रममुष्मै दत्त शक्वरी स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा
शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त जनभृत स्थ राष्ट्रदा राष्ट्रम्मे दत्त

स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त विश्वभृत स्थ राष्ट्रदा राष्ट्रम्मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त ।
मधुमतीर्मधुमतीभिः पृच्यन्ताम्महि क्षत्रङ्क्षत्रियाय वन्वानाऽअनाधृष्टाः सीदत सहौजसो महि क्षत्रङ्क्षत्रियाय दधतीः ४

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ।
अग्नये स्वाहा सोमाय स्वाहा सवित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे स्वाहा बृहस्पतये स्वाहेन्द्राय स्वाहा घोषाय स्वाहा श्लोकाय स्वाहाꣳशाय स्वाहा भगाय स्वाहार्यम्णे स्वाहा ५

पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।
अनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि स्वाहा राजस्वः ६

सधमादो द्युम्निनीरापऽएताऽअनाधृष्टाऽअपस्यो वसानाः ।
पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशुर्मातृतमास्वन्तः ७

क्षत्रस्योल्बमसि क्षत्रस्य जराय्वसि क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसीन्द्रस्य वार्त्रघ्नमसि मित्रस्यासि वरुणस्यासि त्वयायँवृत्रँवधेत् ।
दृवासि रुजासि क्षुमासि ।
पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चम्पातैनन्तिर्यञ्चन्दिग्भ्यः पात ८

आविर्मर्याऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रो वृद्धश्रवाऽआवित्तौ

मित्रावरुणौ धृतव्रतावावित्तः पूषा विश्ववेदाऽआवित्ते द्यावापृथिवी
विश्वशम्भुवावावित्तादितिरुरुशर्मा ९

अवेष्टा दन्दशूकाः प्राचीमारोह गायत्री त्वावतु रथन्तरꣳ साम
त्रिवृत्स्तोमो वसन्तऽऋतुर्ब्रह्म द्रविणन्दक्षिणामारोह १०

दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदश स्तोमो ग्रीष्मऽऋतुः
क्षत्रन्द्रविणम्प्रतीचीमारोह ११

प्रतीचीमारोह जगती त्वावतु वैरूपꣳ साम सप्तदश स्तोमो
वर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह १२

उदीचीमारोहानुष्टुप्त्वावतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः
फलन्द्रविणमूर्ध्वामारोह १३

ऊर्ध्वामारोह पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ
स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम्प्रत्यस्तन्नमुचेः शिरः १४

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयात् ।
मृत्योः पाह्योजोसि सहोस्यमृतमसि १५

हिरण्यरूपाऽउषसो विरोकऽउभाविन्द्राऽउदिथः सूर्यश्च ।
आरोहतँवरुण मित्र गर्तन्ततश्चक्षाथामदितिन्दितिञ्च मित्रोसि
वरुणोसि १६

सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण

।
क्ष॒त्राणा॑ङ्क्ष॒त्रप॑तिरे॒ध्यति॑ दि॒द्यून्पा॑हि १७

इमन्दे॑वाऽअसप॒त्नꣳ सु॑वध्व॒म्मह॒ते क्ष॒त्राय॑ मह॒ते ज्यैष्ठ्या॑य मह॒ते जान॑राज्या॒येन्द्र॑स्येन्द्रि॒याय॑ ।
इ॒मम॒मुष्य॑ पु॒त्रम॒मुष्यै॑ पु॒त्रम॒स्यै वि॒शऽए॒ष वौ॑मी॒ राजा॒ सोमो॒स्माक॑म्ब्राह्म॒णाना॒ꣳ राजा॑ १८

प्र पर्व॑तस्य वृष॒भस्य॑ पृ॒ष्ठान्नाव॑श्चरन्ति स्व॒सिच॑ऽइया॒नाः ।
ताऽआव॑वृत्रन्नध॒रागुद॑क्ता॒ऽअहि॒म्बुध्न्य॒मनु॒ रीय॑माणाः ।
विष्णो॑र्वि॒क्रम॑णमसि॒ विष्णो॒र्विक्रा॑न्तमसि॒ विष्णोः॑ क्रा॒न्तम॑सि १९

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑ रू॒पाणि॒ परि॒ ता ब॑भूव ।
यत्का॑मास्ते जुहु॒मस्तन्नौ॑ऽअस्त्व॒यम॒मुष्य॑ पि॒तासाव॒स्य पि॒ता व॒यꣳ स्या॑म॒ पत॑यो रयी॒णाꣳ स्वाहा॑ ।
रुद्र॒ यत्ते॒ क्रिवि॒ पर॒न्नाम॒ तस्मि॑न्हु॒तम॑स्यमे॒ष्टम॑सि॒ स्वाहा॑ २०

इन्द्र॑स्य॒ वज्रौ॑सि मि॒त्रावरु॑णयोस्त्वा प्रशा॒स्त्रोः प्र॒शिषा॑ युनज्मि ।
अ॒व्य॑थायै त्वा स्व॒धायै॒ त्वारि॑ष्टो॒ऽअर्जु॑नो म॒रुता॑म्प्रस॒वेन॑ ज॒यापा॑म॒ मन॑सा॒ समि॑न्द्रि॒येण॑ २१

मा त॑ऽइन्द्र ते व॒यन्तु॑राषा॒डयु॑क्तासो॒ऽअब्र॒ह्मता॒ विद॑साम ।
तिष्ठा॒ रथ॒मधि॒ यँव॑ज्रहस्ता र॒श्मीन्दे॑व यमसे॒ स्वश्वा॑न् २२

अ॒ग्नये॑ गृ॒हप॑तये॒ स्वाहा॒ सोमा॑य॒ वन॒स्पत॑ये॒ स्वाहा॑ म॒रुता॒मोज॑से॒ स्वाहेन्द्र॑स्येन्द्रि॒याय॒ स्वाहा॑ ।

पृथिवि मातर्मा मा हिꣳसीर्मोऽअहन्त्वाम् २३

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् २४

इयदस्यायुरस्यायुर्मयि धेहि युङ्ङसि वर्चोसि वर्चो मयि
धेह्यूर्गस्यूर्जम्मयि धेहि ।
इन्द्रस्य वाँवीर्यकृतौ बाहूऽअभ्युपावहरामि २५

स्योनासि सुषदासि क्षत्रस्य योनिरसि ।
स्योनामासीद सुषदामासीद क्षत्रस्य योनिमासीद २६

निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः २७

अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ताम्ब्रह्मँस्त्वम्ब्रह्मासि सवितासि
सत्यप्रसवो वरुणोसि सत्यौजाऽइन्द्रोसि विशौजा रुद्रोसि सुशेवः
।
बहुकार श्रेयस्कर भूयस्करेन्द्रस्य वज्रोसि तेन मे रध्य २८

अग्निः पृथुर्धर्मणस्पतिर्जुषाणोऽअग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु
स्वाहा स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वꣳ
सजातानाम्मध्यमेष्ठ्याय २९

सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा
पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाग्निना तेजसा

सोमे॑न॒ राज्ञा॒ विष्णु॑ना दश॒म्या दे॒वत॑या॒ प्रसू॑त॒ः प्रस॑र्पामि ३०

अ॒श्विभ्या॑म्पच्यस्व॒ सर॑स्वत्यै पच्य॒स्वेन्द्रा॑य सु॒त्राम्णे॑ पच्यस्व ।
वा॒यु॒ः पू॒तः प॒वित्रे॑ण प्र॒त्यङ्क्सोमो॒ऽअति॑स्रुत॒ः । इन्द्र॑स्य यु॒ज्य॒ः सखा॑ ३१

कु॒विद॒ङ्ग यव॑मन्तो॒ यव॑ञ्चि॒द्यथा॒ दान्त्य॑नुपू॒र्वं वि॒यूय॑ ।
इ॒हेहै॑षाङ्कृणु॒हि॒ भोज॑नानि॒ ये ब॒र्हिषो॒ नम॑ऽउक्तिँ॒यज॑न्ति ।
उ॒प॒या॒मगृ॑हीतोस्य॒श्विभ्या॑न्त्वा॒ सर॑स्वत्यै॒ त्वेन्द्रा॑य त्वा सु॒त्राम्णे॑ ३२

यु॒वꣳ सु॒राम॑मश्विना॒ नमु॑चावासु॒रे सचा॑ ।
वि॒पि॒पा॒ना शु॑भस्पती॒ऽइन्द्र॒ङ्कर्म॑स्वावतम् ३३

पु॒त्रमि॑व पि॒तरा॑व॒श्विनो॒भेन्द्रा॒वथु॒ः काव्यै॑र्द॒ꣳसना॑भि॒ः ।
यत्सु॒रामँ॒व्यपि॑ब॒ः शची॑भि॒ः सर॑स्वती त्वा मघवन्नभिष्णाक् ३४

इति दशमोऽध्यायः

# एकादशोऽध्यायः

युञ्जानः प्रथमम्मनस्तत्वाय सविता धियः ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्याऽअध्याभरत् १

युक्तेन मनसा वयन्देवस्य सवितुः सवे ।
स्वर्ग्याय शक्त्या २

युक्त्वाय सविता देवान्त्स्वर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ३

युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः ४

युजे वाम्ब्रह्म पूर्व्यन्नमोभिर्वि श्लोकऽएतु पथ्येव सूरेः ।
शृण्वन्तु विश्वेऽअमृतस्य पुत्राऽआ ये धामानि दिव्यानि तस्थुः ५

यस्य प्रयाणमन्वन्यऽइद्ययुर्देवा देवस्य महिमानमोजसा ।
यः पार्थिवानि विममे सऽएतशो रजाँसि देवः सविता महित्वना
६

देव सवितः प्रसुव यज्ञम्प्रसुव यज्ञपतिम्भगाय ।
दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु ७

इमन्नो देव सवितर्यज्ञम्प्रणय देवाव्यꣳ सखिविदꣳ
सत्राजितन्धनजितꣳ स्वर्जितम् ।

ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम्बृहद्गायत्रवर्तनि स्वाहा ८

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददे गायत्रेण च्छन्दसाङ्गिरस्वत्पृथिव्याः
सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन च्छन्दसाङ्गिरस्वत् ९

अभ्रिरसि नार्यसि त्वया वयमग्निꣳ शकेम खनितुꣳ सधस्थऽआ ।
जागतेन च्छन्दसाङ्गिरस्वत् १०

हस्तऽआधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्याऽअध्याभरदानुष्टुभेन च्छन्दसाङ्गिरस्वत्
११

प्रतूर्त्तँवाजिन्नाद्रव वरिष्ठामनु सँवतम् ।
दिवि ते जन्म परममन्तरिक्षे तव नाभिः पृथिव्यामधि योनिरित्
१२

युञ्जाथाꣳ रासभँयुवमस्मिन्यामे वृषण्वसू ।
अग्निम्भरन्तमस्मयुम् १३

योगेयोगे तवस्तरँवाजेवाजे हवामहे ।
सखायऽइन्द्रमूतये १४

प्रतूर्वन्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यम्मयोभूरेहि ।
उर्वन्तरिक्षँवीहि स्वस्तिगव्यूतिरभयानि कृण्वन्पूष्णा सयुजा सह
१५

पृथिव्याः
सधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्नि-
म्पुरीष्यमङ्गिरस्वद्भरिष्यामः १६

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवीऽआततन्थ १७

आगत्य वाज्यध्वानꣳ सर्वा मृधो विधूनुते ।
अग्निꣳ सधस्थे महति चक्षुषा निचिकीषते १८

आक्रम्य वाजिन्पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनेम तँवयम् १९

द्यौस्ते पृष्ठम्पृथिवी सधस्थमात्मान्तरिक्षꣳ समुद्रो योनिः ।
विख्याय चक्षुषा त्वमभितिष्ठ पृतन्यतः २०

उत्क्राम महते सौभगायास्मादास्थानाद्द्रविणोदा वाजिन् ।
वयꣳ स्याम सुमतौ पृथिव्याऽअग्निङ्खनन्तऽउपस्थेऽअस्याः २१

उदक्रमीद्द्रविणोदा वाज्यर्वाकः सुलोकꣳ सुकृतम्पृथिव्याम् ।
ततः खनेम सुप्रतीकमग्निꣳ स्वो रुहाणाऽअधि नाकमुत्तमम् २२

आ त्वा जिघर्मि मनसा घृतेन प्रतिक्षियन्तम्भुवनानि विश्वा ।
पृथुन्तिरश्चा वयसा बृहन्तँव्यचिष्ठमन्नै रभसन्दृशानम् २३

आ विश्वतः प्रत्यञ्चञ्जिघर्म्यरक्षसा मनसा तज्जुषेत ।
मर्यश्री स्पृहयद्वर्णोऽअग्निर्नाभिमृशे तन्वा जर्भुराणः २४

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।
दधद्रत्नानि दाशुषे २५

परि त्वाग्ने पुरँवयँविप्रँ सहस्य धीमहि ।
धृषद्वर्णन्दिवेदिवे हन्तारम्भङ्गुरावताम् २६

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वँवनेभ्यस्त्वमोषधीभ्यस्त्वन्नृणान्नृपते जायसे शुचिः २७

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
पृथिव्याः सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामि ।
ज्योतिष्मन्तन्त्वाग्ने सुप्रतीकमजस्रेण भानुना दीद्यतम् ।
शिवम्प्रजाभ्योहिँसन्तम्पृथिव्याः
सधस्थादग्निम्पुरीष्यमङ्गिरस्वत्खनामः २८

अपाम्पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाँ॥ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व २९

शर्म च स्थो वर्म च स्थोच्छिद्रे बहुलेऽउभे ।
व्यचस्वती सँवसाथाम्भृतमग्निम्पुरीष्यम् ३०

सँवसाथाँ स्वर्विदा समीचीऽउरसा त्मना ।
अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित् ३१

पुरीष्योसि विश्वभराऽअथर्वा त्वा प्रथमो निरमन्थदग्ने ।
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतः ३२

तमु त्वा दध्यङ्ङृषिः पुत्रऽईधेऽअथर्वणः ।
वृत्रहणम्पुरन्दरम् ३३

तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् ।
धनञ्जयꣳ रणेरणे ३४

सीद होतः स्वऽउ लोके चिकित्वान्सादया यज्ञꣳ सुकृतस्य योनौ
।
देवावीर्देवान्हविषा यजास्यग्ने बृहद्यजमाने वयो धाः ३५

नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ२॥ऽअसदत्सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वोऽअग्निः ३६

सꣳसीदस्व महाꣳ२॥ऽअसि शोचस्व देववीतमः ।
वि धूममग्नेऽअरुषम्मियेध्य सृज प्रशस्त दर्शतम् ३७

अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासामास्थानादुज्जिहतामोषधयः सुपिप्पलाः ३८

सन्ते वायुर्मातरिश्वा दधातूत्तानाया हृदयँयद्विकस्तम् ।
यो देवानाञ्चरसि प्राणथेन कस्मै देव वषडस्तु तुभ्यम् ३९

सुजातो ज्योतिषा सुह शर्म वरूथमासदत्स्वः ।
वासोऽअग्ने विश्वरूपꣳ सँव्ययस्व विभावसो ४०

उदु तिष्ठ स्वध्वरावा नो देव्या धिया ।
दृशे च भासा बृहता सुशुक्वनिराग्ने याहि सुशस्तिभिः ४१

ऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ४२

स जातो गर्भोऽअसि रोदस्योरग्ने चारुर्विभृतऽओषधीषु ।
चित्रः शिशुः परि तमाꣳस्यक्तून्प्रमातृभ्योऽअधि कनिक्रदद्गाः ४३

स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् ।
पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ४४

शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवीऽअभिशोचीर्मान्तरिक्षम्मा वनस्पतीन् ४५

प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा ।
भरन्नग्निम्पुरीष्यम्मा पाद्यायुषः पुरा ।
वृषाग्निँवृषणम्भरन्नपाङ्गर्भꣳ समुद्रियम् ।
अग्नऽआयाहि वीतये ४६

ऋतꣳ सत्यमृतꣳ सत्यमग्निम्पुरीष्यमङ्गिरस्वद्भरामः ।
ओषधयः प्रतिमोदध्वमग्निमेतꣳ शिवमायन्तमभ्यत्र युष्माः ।

व्यस्युन्विश्वाऽअनिराऽअमीवा निषीदन्नोऽअप दुर्मतिञ्जहि ४७

ओषधयः प्रतिगृभ्णीत पुष्पवतीः सुपिप्पलाः ।
अयँवो गर्भऽऋत्वियः प्रत्नꣳ सधस्थमासदत् ४८

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसोऽअमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ ४९

आपो हि ष्ठा मयोभुवस्ता नऽऊर्जे दधातन ।
महे रणाय चक्षसे ५०

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ५१

तस्माऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ५२

मित्रः सꣳसृज्य पृथिवीम्भूमिञ्च ज्योतिषा सह ।
सुजातञ्जातवेदसमयक्ष्माय त्वा सꣳसृजामि प्रजाभ्यः ५३

रुद्राः सꣳसृज्य पृथिवीम्बृहज्ज्योतिः समीधिरे ।
तेषाम्भानुरजस्रऽइच्छुक्रो देवेषु रोचते ५४

सꣳसृष्टाँवसुभी रुद्रैर्धीरैः कर्मण्याम्मृदम् ।
हस्ताभ्याम्मृद्वीङ्कृत्वा सिनीवाली कृणोतु ताम् ५५

सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा ।
सा तुभ्यमदिते मह्योखान्दधातु हस्तयोः ५६

उखाङ्कृणोतु शक्त्या बाहुभ्यामदितिर्धिया ।
माता पुत्रँयथोपस्थे साग्निम्बिभर्तु गर्भऽआ ।
मखस्य शिरोसि ५७

वसवस्त्वा कृण्वन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्ध्रुवासि पृथिव्यसि
धारया मयि प्रजाँ रायस्पोषङ्गौपत्यः सुवीर्यः सजातान्यजमानाय
रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि
धारया मयि प्रजाँ रायस्पोषङ्गौपत्यः सुवीर्यः
सजातान्यजमानायादित्यास्त्वा कृण्वन्तु जागतेन
च्छन्दसाङ्गिरस्वद्ध्रुवासि द्यौरसि धारया मयि प्रजाँ
रायस्पोषङ्गौपत्यः सुवीर्यः सजातान्यजमानाय विश्वे त्वा देवा
वैश्वानराः कृण्वन्त्वानुष्टुभेन च्छन्दसाङ्गिरस्वद्ध्रुवासि दिशोसि
धारया मयि प्रजाँ रायस्पोषङ्गौपत्यः सुवीर्यः सजातान्यजमानाय
५८

अदित्यै रास्नास्यदितिष्टे बिलङ्गृभ्णातु ।
कृत्वाय सा महीमुखाम्मृन्मयीँयोनिमग्नये ।
पुत्रेभ्यः प्रायच्छददितिः श्रपयानिति ५९

वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वा धूपयन्तु
त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वा धूपयन्तु जागतेन
च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन
च्छन्दसाङ्गिरस्वदिन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा

धूपयतु ६०

अदितिष्ट्वा देवी विश्वदेव्यावती पृथिव्याः
सधस्थेऽअङ्गिरस्वत्खनत्ववट देवानान्त्वा पत्नीर्देवीर्विश्वदेव्यावतीः
पृथिव्याः सधस्थेऽअङ्गिरस्वद्दधतूखे धिषणास्त्वा
देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वदभीन्धतामुखे
वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः पृथिव्याः
सधस्थेऽअङ्गिरस्वच्छ्रपयन्तूखे ग्नास्त्वा देवीर्विश्वदेव्यावतीः
पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे जनयस्त्वाच्छिन्नपत्रा
देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽअङ्गिरस्वत्पचन्तूखे ६१

मित्रस्य चर्षणीधृतोवो देवस्य सानसि ।
द्युम्नञ्चित्रश्रवस्तमम् ६२

देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या ।
अव्यथमाना पृथिव्यामाशा दिशऽआपृण ६३

उत्थाय बृहती भवोदु तिष्ठ ध्रुवा त्वम् ।
मित्रैतान्तऽउखाम्परिददाम्यभित्त्याऽएषा मा भेदि ६४

वसवस्त्वाच्छृन्दन्तु गायत्रेण च्छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तु
त्रैष्टुभेन च्छन्दसाङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तु जागतेन
च्छन्दसाङ्गिरस्वद्विश्वे त्वा देवा वैश्वानराऽआच्छृन्दन्त्वानुष्टुभेन
च्छन्दसाङ्गिरस्वत् ६५

आकूतिमग्निम्प्रयुजँ स्वाहा मनो मेधामग्निम्प्रयुजँ स्वाहा

चित्तँविज्ञातमग्निम्प्रयुजऽँ स्वाहा वाचो विधृतिमग्निम्प्रयुजऽँ
स्वाहा प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ६६

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो रायऽइषुध्यति द्युम्नँवृणीत पुष्यसे स्वाहा ६७

मा सु भित्था मा सु रिषोम्ब धृष्णु वीरयस्व सु ।
अग्निश्चेदङ्करिष्यथः ६८

दृꣳहस्व देवि पृथिवि स्वस्तयऽआसुरी माया स्वधया कृतासि ।
जुष्टन्देवेभ्यऽइदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञेऽअस्मिन् ६९

द्र्वन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः ।
सहसस्पुत्रोऽअद्भुतः ७०

परस्याऽअधि सँवतोवराँ२॥ऽअभ्यातर ।
यत्राहमस्मि ताँ२॥ऽअव ७१

परमस्याः परावतो रोहिदश्वऽइहागहि ।
पुरीष्यः पुरुप्रियोग्ने त्वन्तरा मृधः ७२

यदग्ने कानि कानि चिदा ते दारूणि दध्मसि ।
सर्वन्तदस्तु ते घृतन्तज्जुषस्व यविष्ठ्य ७३

यदत्त्युपजिह्विका यद्वम्रोऽअतिसर्पति ।
सर्वन्तदस्तु ते घृतन्तज्जुषस्व यविष्ठ्य ७४

अहरहरप्रयावम्भरन्तोश्वायेव तिष्ठते घासमस्मै ।
रायस्पोषेण समिषा मदन्तोग्ने मा ते प्रतिवेशा रिषाम ७५

नाभा पृथिव्याः समिधानेऽअग्नौ रायस्पोषाय बृहते हवामहे ।
इरम्मदम्बृहदुक्थँयजत्रञ्जेतारमग्निम्पृतनासु सासहिम् ७६

याः सेनाऽअभीत्वरीराव्याधिनीरुगणाऽउत ।
ये स्तेना ये च तस्करास्ताँस्तेऽअग्नेपिदधाम्यास्ये ७७

दꣳष्ट्राभ्याम्मलिम्लूञ्जम्भ्यैस्तस्कराꣳ॥ऽउत ।
हनुभ्याꣳ स्तेनान्भगवस्ताँस्त्वङ्खाद सुखादितान् ७८

ये जनेषु मलिम्लव स्तेनासस्तस्करा वने ।
ये कक्षेष्वघायवस्ताँस्ते दधामि जम्भयोः ७९

योऽअस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः ।
निन्दाद्योऽअस्मान्धिप्साच्च सर्वन्तम्मस्मसा कुरु ८०

सꣳशितम्मे ब्रह्म सꣳशितँवीर्यम्बलम् ।
सꣳशितङ्क्षत्रञ्जिष्णु यस्याहमस्मि पुरोहितः ८१

उदेषाम्बाहूऽअतिरमुद्वर्चोऽअथो बलम् ।
क्षिणोमि ब्रह्मणामित्रानुन्नयामि स्वाꣳ॥ऽअहम् ८२

अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः ।

प्रप्रं दातारंन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुंष्पदे ८३

इत्येकादशोऽध्यायः

# अथ द्वादशोऽध्यायः

दृशानो रुक्मऽउर्व्या व्यद्यौदुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः १

नक्तोषासा समनसा विरूपे धापयेते शिशुमेकः समीची ।
द्यावाक्षामा रुक्मोऽअन्तर्विभाति देवाऽअग्निन्धारयन्द्रविणोदाः २

विश्वा रूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रन्द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्योनु प्रयाणमुषसो विराजति ३

सुपर्णोसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ।
स्तोमऽआत्मा छन्दाᳬंस्यङ्गानि यजूᳬंषि नाम ।
साम ते तनूर्वामदेव्यँयज्ञायज्ञियम्पुच्छन्धिष्ण्याः शफाः ।
सुपर्णोसि गरुत्मान्दिवङ्गच्छ स्वः पत ४

विष्णोः क्रमोसि सपत्नहा गायत्रञ्छन्दऽआरोह पृथिवीमनु विक्रमस्व
विष्णोः क्रमोस्यभिमातिहा त्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनु विक्रमस्व
विष्णोः क्रमोस्यरातीयतो हन्ता जागतञ्छन्दऽआरोह दिवमनु
विक्रमस्व विष्णोः क्रमोसि शत्रूयतो हन्तानुष्टुभञ्छन्दऽआरोह
दिशोनु विक्रमस्व ५

अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः ६

अग्नेभ्यावर्तिन्नभि मा निवर्तस्वायुषा वर्चसा प्रजया धनेन ।

सन्या मेधया रय्या पोषेण ७

अग्नेऽअङ्गिरः शतन्ते सन्त्वावृतः सहस्रन्तऽउपावृतः ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ८

पुनरूर्जा निवर्तस्व पुनरग्नऽइषायुषा ।
पुनर्नः पाह्यꣳहसः ९

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि १०

आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ११

उदुत्तमँवरुण पाशमस्मदवाधमँवि मध्यमꣳ श्रथाय ।
अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम १२

अग्रे बृहन्नुषसामूर्ध्वोऽअस्थान्निर्जगन्वान्तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्गऽआ जातो विश्वा सद्मान्यप्राः १३

हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् १४

सीद त्वम्मातुरस्याऽउपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनान्तपसा मार्चिषाभिशोचीरन्तरस्याꣳ शुक्रज्योतिर्विभाहि १५

अन्तरग्ने रुचा त्वमुखायाः सदने स्वे ।
तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव १६

शिवो भूत्वा मह्यमग्नेऽअथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वँयोनिमिहासदः १७

दिवस्परि प्रथमञ्जज्ञेऽअग्निरस्माद्द्वितीयम्परि जातवेदाः ।
तृतीयमप्सु नृमणाऽअजस्त्रमिन्धानऽएनञ्जरते स्वाधीः १८

विद्मा तेऽअग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा ।
विद्मा ते नाम परमङ्गुहा यद्विद्मा तमुत्सँयतऽआजगन्थ १९

समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षाऽईधे दिवोऽअग्नऽऊधन् ।
तृतीये त्वा रजसि तस्थिवाꣳसमपामुपस्थे महिषाऽअवर्धन् २०

अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धोऽअख्यदा रोदसी भानुना भात्यन्तः २१

श्रीणामुदारो धरुणो रयीणाम्मनीषाणाम्प्रार्पणः सोमगोपाः ।
वसुः सूनुः सहसोऽअप्सु राजा विभात्यग्रऽउषसामिधानः २२

विश्वस्य केतुर्भुवनस्य गर्भऽआ रोदसीऽअपृणाज्जायमानः ।
वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च २३

उशिक्पावकोऽअरतिः सुमेधा मर्तेष्वग्निरमृतो निधायि ।
इयर्ति धूममरुषम्भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् २४

दृशानो रुक्मऽउर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः २५

यस्तेऽअद्य कृणवद्भद्रशोचेपूपन्देव घृतवन्तमग्ने ।
प्र तन्नय प्रतरँवस्योऽअच्छाभि सुम्नन्देवभक्तँयविष्ठ २६

आ तम्भज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभज शस्यमाने ।
प्रियः सूर्ये प्रियोऽअग्ना भवात्युज्जातेन भिनददुज्जनित्वैः २७

त्वामग्ने यजमानाऽअनु द्यून्विश्वा वसु दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजङ्गोमन्तमुशिजो विवव्रुः २८

अस्ताव्यग्निर्नराँ सुशेवो वैश्वानरऽऋषिभिः सोमगोपाः ।
अद्वेषे द्यावापृथिवी हुवेम देवा धत्त रयिमस्मे सुवीरम् २९

समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् ।
आस्मिन्हव्या जुहोतन ३०

उदु त्वा विश्वे देवाऽअग्ने भरन्तु चित्तिभिः ।
स नो भव शिवस्त्वँ सुप्रतीको विभावसुः ३१

प्रेदग्ने ज्योतिष्मान्याहि शिवेभिरर्चिभिष्ट्वम् ।
बृहद्भिर्भानुभिर्भासन्मा हिँसीस्तन्वा प्रजाः ३२

अक्रन्ददग्नि स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।

सुद्यो जंज्ञानो वि हीमिद्धोऽअरुव्युदा रोदंसी भानुना भात्युन्तः ३३

प्रप्रायमुग्निर्भरुतस्यं शृण्वे वि यत्सूर्यो न रोचंते बृहद्भाः ।
अभि यः पूरुम्पृतंनासु तुस्थौ दीदायु दैव्योऽअतिथिः शिवो नः
३४

आपों देवीः प्रतिंगृभ्णीतु भस्मैतत्स्योने कृंणुध्वꣳ सुरभाऽउं लोके ।
तस्मैं नमन्ताञ्जनंयः सुपत्नींर्मातेवं पुत्रम्बिंभृताप्स्वेनत् ३५

अप्स्वग्ने सधिष्टव सौषंधीरनुंरुध्यसे ।
गर्भे सञ्जांयसे पुनः ३६

गर्भोऽअस्योषंधीनाङ्गर्भो वनुस्पतींनाम् ।
गर्भो विश्वंस्य भूतस्याग्ने गर्भोऽअपामंसि ३७

प्रसद्य भस्मंना योनिंमुपश्चं पृथिवीमंग्ने ।
सꣳसृज्यं मातृभिष्ट्वञ्ज्योतिंष्मान्पुनुरासंदः ३८

पुनंरासद्य सदंनमुपश्चं पृथिवीमंग्ने ।
शेषें मातुर्यथोपस्थेन्तरंस्याꣳ शिवतंमः ३९

पुनरूर्जा निवंर्तस्व पुनंरग्नऽइषायुंषा ।
पुनंर्नः पाह्यꣳहंसः ४०

सुह रुय्या निवंर्तस्वाग्ने पिन्वंस्व धारंया ।
विश्वप्स्न्यां विश्वतुस्परिं ४१

बोधा मेऽअस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वोऽअनु त्वो गृणाति वन्दारुष्टे तन्वँवन्देऽअग्ने ४२

स बोधि सूरिर्मघवा वसुपते वसुदावन् ।
युयोध्यस्मद्द्वेषाꣳसि विश्वकर्मणे स्वाहा ४३
पुनस्त्वादित्या रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वन्तन्वँवर्धयस्व सत्याः सन्तु यजमानस्य कामाः ४४

अपेत वीत वि च सर्पतातो येत्र स्थ पुराणा ये च नूतनाः ।
अदाद्यमोवसानम्पृथिव्याऽअक्रन्निमम्पितरो लोकमस्मै ४५

सञ्ज्ञानमसि कामधरणम्मयि ते कामधरणम्भूयात् ।
अग्नेर्भस्मास्यग्नेः पुरीषमसि चित स्थ परिचितऽऊर्ध्वचितः
श्रयध्वम् ४६

अयꣳ सोऽअग्निर्यस्मिन्त्सोममिन्द्रः सुतन्दधे जठरे वावशानः ।
सहस्रियँवाजमत्यन्न सप्तिꣳ ससवान्त्सन्त्स्तूयसे जातवेदः ४७

अग्ने यत्ते दिवि वर्चः पृथिव्याँयदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः ४८

अग्ने दिवोऽअर्णमच्छा जिगास्यच्छा देवाꣳ२॥ऽऊचिषे धिष्ण्या ये ।
या रोचने परस्तात्सूर्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः ४९

पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसः ।

जुषन्ताँय्यज्ञमद्रुहोनमीवाऽइषो मुही॒ ५०

इडामग्ने पुरुदꣳसꣳ सनिङ्गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ५१

अयन्ते योनिर्ऋत्वियो यतो जातोऽअरोचथाः ।
तञ्जानन्नग्नऽआरोहाथा नो वर्धया रयिम् ५२

चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद ५३

लोकम्पृण च्छिद्रम्पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ५४

ताऽअस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः ।
जन्मन्देवानांविशस्त्रिष्वारोचने दिवः ५५

इन्द्रंविश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ।
रथीतमꣳ रथीनांवाजानाꣳ सत्पतिम्पतिम् ५६

समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभि सँवसानौ ५७

सँवाम्मनाꣳसि सँव्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वन्नऽइषमूर्जँयजमानाय धेहि ५८

अग्ने त्वम्पुरीष्यो रयिमान्पुष्टिमाँ२॥ऽअसि ।
शिवाः कृत्वा दिशः सर्वाः स्वँयोनिमिहासदः ५९

भवतन्नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः
६०

मातेव पुत्रम्पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।
ताँविश्वैर्देवैर्ऋतुभिः सँविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु ६१

असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा तऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु ६२

नमः सु ते निर्ऋते तिग्मतेजोयस्मयँविचृता बन्धमेतम् ।
यमेन त्वँयम्या सँविदानोत्तमे नाकेऽअधिरोहयैनम् ६३

यस्यास्ते घोरऽआसञ्जुहोम्येषाम्बन्धानामवसर्जनाय ।
यान्त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिन्त्वाहम्परिवेद विश्वतः ६४

यन्ते देवी निर्ऋतिराबबन्ध पाशङ्ग्रीवास्वविचृत्यम् ।
तन्ते विष्याम्यायुषो न मध्यादथैतम्पितुमद्धि प्रसूतः ।
नमो भूत्यै येदञ्चकार ६५

निवेशनः सङ्गमनो वसूनाँविश्वा रूपाभिचष्टे शचीभिः ।
देवऽइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ६६

सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ६७

युनक्त सीरा वि युगा तनुध्वङ्कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभराऽअसन्नो नेदीयऽइत्सृण्यः पक्वमेयात् ६८

शुनᳬ सुफाला विकृषन्तु भूमिᳬ शुनङ्कीनाशाऽअभियन्तु वाहैः ।
शुनासीरा हविषा तोशमाना सुपिप्पलाऽओषधीः कर्तनास्मे ६९

घृतेन सीता मधुना समज्यताँविश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व ७०

लाङ्गलम्पवीरवत्सुशेवᳬ सोमपित्सरु ।
तदुद्वपति गामविम्प्रफर्व्यञ्च पीवरीम्प्रस्थावद्रथवाहणम् ७१

कामङ्कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्याम्पूष्णे प्रजाभ्यऽओषधीभ्यः ७२

विमुच्यध्वमघ्न्या देवयानाऽअगन्म तमसस्पारमस्य ।
ज्योतिरापाम ७३

सजूरब्दोऽअयवोभिः सजूरुषाऽअरुणीभिः । सजोषसावश्विना
दᳬसोभिः सजूः सूरऽएतशेन सजूर्वैश्वानरऽइडया घृतेन स्वाहा ७४

याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा ।
मनै नु बभ्रूणामहᳬ शतन्धामानि सप्त च ७५

शतँवोऽअम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमम्मेऽअगदङ्कृत ७६

ओषधीः प्रतिमोदध्वम्पुष्पवतीः प्रसूवरीः ।
अश्वाऽइव सजित्वरीर्वीरुधः पारयिष्णवः ७७

ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे ।
सनेयमश्वङ्गाँवासऽआत्मानन्तव पूरुष ७८

अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ।
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ७९

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः सऽउच्यते भिषग्रक्षोहामीवचातनः ८०

अश्वावतीँ सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वाऽओषधीरस्माऽअरिष्टतातये ८१

उच्छुष्माऽओषधीनाङ्गावो गोष्ठादिवेरते ।
धनँ सनिष्यन्तीनामात्मानन्तव पूरुष ८२

इष्कृतिर्नाम वो माताथो यूयँ स्थ निष्कृतीः ।
सीराः पतत्रिणी स्थन यदामयति निष्कृथ ८३

अति विश्वाः परिष्ठा स्तेनऽइव व्रजमक्रमुः ।

ओषधीः प्राचुच्यवुर्यत्किञ्च तुन्वो रपः ८४

यदिमा वाजयन्नहमोषधीर्हस्तऽआदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ८५

यस्यौषधीः प्रसर्पथाङ्गमङ्गम्परुष्परुः ।
ततो यक्ष्मंविबाधध्वऽउग्रो मध्यमशीरिव ८६

साकँयक्ष्म प्रपत चाषेण किकिदीविना ।
साकँवातस्य ध्राज्या साकन्नश्य निहाकया ८७

अन्या वोऽअन्यामवत्वन्यान्यस्याऽउपावत ।
ताः सर्वाः सँविदानाऽइदम्मे प्रावता वचः ८८

याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वँहसः ८९

मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत ।
अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात् ९०

अवपतन्तीरवदन्दिवऽओषधयस्परि ।
यञ्जीवमश्नवामहै न स रिष्याति पूरुषः ९१

याऽओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
तासामसि त्वमुत्तमारङ्कामाय शँ हृदे ९२

याऽओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
बृहस्पतिप्रसूताऽअस्यै सन्दत्त वीर्यम् ९३

याश्चेदमुपशृणवन्ति याश्च दूरम्परागताः ।
सर्वाः सङ्गत्य वीरुधोस्यै सन्दत्त वीर्यम् ९४

मा वो रिषत्खनिता यस्मै चाहङ्खनामि वः ।
द्विपाच्चतुष्पादस्माकꣳ सर्वमस्त्वनातुरम् ९५

ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तꣳ राजन्पारयामसि ९६

नाशयित्री बलासस्यार्शसऽउपचितामसि ।
अथो शतस्य यक्ष्माणाम्पाकारोरसि नाशनी ९७

त्वाङ्गन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ।
त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ९८

सहस्व मेऽअरातीः सहस्व पृतनायतः ।
सहस्व सर्वम्पाप्मानꣳ सहमानास्योषधे ९९

दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा विरोहतात् १००

त्वमुत्तमास्योषधे तव वृक्षाऽउपस्तयः ।
उपस्तिरस्तु सोस्माकँयोऽअस्माँ२॥ऽअभिदासति १०१

मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट्
।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम १०२

अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह ।
वपान्तेऽअग्निरिषितोऽअरोहत् १०३

अग्ने यत्ते शुक्रँयच्चन्द्रँयत्पूतँयच्च यज्ञियम् ।
तद्देवेभ्यो भरामसि १०४

इषमूर्जमहमितऽआदमृतस्य योनिम्महिषस्य धाराम् ।
आ मा गोषु विशत्वा तनूषु जहामि सेदिमनिराममीवाम् १०५

अग्ने तव श्रवो वयो महि भ्राजन्तेऽअर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यन्दधासि दाशुषे कवे १०६

पावकवर्चाः शुक्रवर्चाऽअनूनवर्चाऽउदियर्षि भानुना ।
पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसीऽउभे १०७

ऊर्जोनपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
त्वेऽइषः सन्दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः १०८

इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायोऽअमर्त्य ।
स दर्शतस्य वपुषो विराजसि पृणक्षि सानसिङ्क्रतुम् १०९

इष्कर्तारमध्वरस्य प्रचेतसङ्क्षयन्तꣳ राधसो महः ।
रातिँवामस्य सुभगाम्महीमिषन्दधासि सानसिꣳ रयिम् ११०

ऋतावानम्महिषँविश्वदर्शतमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।
श्रुत्कर्णꣳ सप्रथस्तमन्त्वा गिरा दैव्यम्मानुषा युगा १११

आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।
भवा वाजस्य सङ्गथे ११२

सन्ते पयाꣳसि समु यन्तु वाजाः सँवृष्ण्यान्यभिमातिषाहः ।
आप्यायमानोऽअमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ११३

आप्यायस्व मदिन्तम सोम विश्वेभिरꣳशुभिः ।
भवा नः सप्रथस्तमः सखा वृधे ११४

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
अग्ने त्वाङ्कामया गिरा ११५

तुभ्यन्ताऽअङ्गिरस्तम विश्वाः सुक्षितयः पृथक् ।
अग्ने कामाय येमिरे ११६

अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
सम्राडेको विराजति ११७

इति द्वादशोऽध्यायः

# अथ त्रयोदशोऽध्यायः

मयि गृह्णाम्यग्रेऽअग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ।
मामु देवताः सचन्ताम् १

अपाम्पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानो महाꣳ२॥ऽआ च पुष्करे दिवो मात्रया वरिम्णा प्रथस्व २

ब्रह्म जज्ञानम्प्रथमम्पुरस्ताद्वि सीमतः सुरुचो वेनऽआवः ।
स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः ३

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ४

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनु यश्च पूर्वः ।
समानँयोनिमनु सञ्चरन्तन्द्रप्सञ्जुहोम्यनु सप्त होत्राः ५

नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु ।
येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ६

याऽइषवो यातुधानानाँये वा वनस्पतीꣳ१॥रनु ।
ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः ७

ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु ।
येषामप्सु सदस्कृतन्तेभ्यः सर्पेभ्यो नमः ८

कृणुष्व पाजः प्रसितिन्न पृथ्वीँयाहि राजेवामवाꣳ२॥ऽइभेन ।

तृष्वीमनु प्रसितिन्द्रूणानोस्तासि विध्य रुक्षसुस्तपिष्ठैः ९

तव भ्रमासऽआशुया पतन्त्यनुस्पृश धृषता शोशुचानः ।
तपूꣳष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्काः १०

प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशोऽअस्याऽअदब्धः ।
यो नो दूरेऽअघशꣳसो योऽअन्त्यग्ने मा किष्टे व्यथिरादधर्षीत् ११

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राꣳ॥ऽओषतात्तिग्महेते ।
यो नोऽअरातिꣳ समिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् १२

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् ।
अग्नेष्ट्वा तेजसा सादयामि १३

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ।
अपाꣳ रेताꣳसि जिन्वति ।
इन्द्रस्य त्वौजसा सादयामि १४

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानन्दधिषे स्वर्षाञ्जिह्वामग्ने चकृषे हव्यवाहम् १५

ध्रुवासि धरुणास्तृता विश्वकर्मणा ।
मा त्वा समुद्रऽउद्वधीन्मा सुपर्णोव्यथमाना पृथिवीन्दृꣳह १६

प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन् ।

व्यचस्वतीम्प्रथस्वतीम्प्रथस्व पृथिव्यसि १७

भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री ।
पृथिवीँयच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः १८

विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ।
अग्निष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया
देवतयाङ्गिरस्वद्ध्रुवा सीद १९

काण्डात्काण्डात्प्ररोहन्ती परुषःपरुषस्परि ।
एवा नो दूर्वे प्रतनु सहस्रेण शतेन च २०

या शतेन प्रतनोषि सहस्रेण विरोहसि ।
तस्यास्ते देवीष्टके विधेम हविषा वयम् २१

यास्तेऽअग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्नोऽअद्य सर्वाभी रुचे जनाय नस्कृधि २२

या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते २३

विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत् ।
प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वञ्ज्योतिर्यच्छ ।
अग्निष्टेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद २४

मधुश्च माधवश्च वासन्तिकावृतूऽअग्नेरन्तःश्लेषोसि
कल्पेतान्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः
पृथङ्मम ज्यैष्ठ्याय सव्रताः ।
येऽअग्नयः समनसोन्तरा द्यावापृथिवीऽइमे ।
वासन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽअभिसँविशन्तु तया
देवतयाङ्गिरस्वद्ध्रुवे सीदतम् २५

अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः ।
सहस्रवीर्यासि सा मा जिन्व २६

मधु वाताऽऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः २७

मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधु द्यौरस्तु नः पिता २८

मधुमान्नो वनस्पतिर्मधुमाँ२॥ऽअस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः २९

अपाङ्गम्भन्त्सीद मा त्वा सूर्योभिताप्सीन्माग्निर्वैश्वानरः ।
अच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वानु त्वा दिव्या वृष्टिः सचताम् ३०

त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपाम्पतिर्वृषभऽइष्टकानाम् ।
पुरीषँवसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्वे परेताः ३१

मही द्यौः पृथिवी च नऽइमँयज्ञम्मिमिक्षताम् ।

प्रियवादिनमरिष्ट्याऽअश्वसादꣳ स्वर्गाय लोकाय भागदुघँवर्षिष्ठाय नाकाय परिवेष्टारम् १३

मन्यवेयस्तापङ्क्रोधाय निसरँयोगाय योक्तारꣳ शोकायाभिसर्तारङ्क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनँवपुषे मानस्कृतꣳ शीलायाञ्जनीकारीन्निर्ऋत्यै कोशकारीँयमायासूम् १४

यमाय यमसूमथर्वभ्योवतोकाꣳ सँवत्सराय पर्यायिणीम्परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सराया-तिष्कद्वरीँवत्सराय विजर्जराꣳ सँवत्सराय पलिक्नीमृभुभ्योजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् १५

सरोभ्यो धैवरमुपस्थावराभ्यो दाशँवैशन्ताभ्यो बैन्दन्नड्वलाभ्यꣳ शौष्कलम्पाराय मार्गारमवाराय कैवर्तन्तीर्थेभ्यऽआन्दँविषमेभ्यो मैनालꣳ स्वनेभ्यꣳ पर्णकञ्गुहाभ्यꣳ किरातꣳ सानुभ्यो जम्भकम्पर्वतेभ्यꣳ किम्पूरुषम् १६

बीभत्सायै पौल्कसँवर्णाय हिरण्यकारन्तुलायै वाणिजम्पश्चादोषाय ग्लाविनँविश्वेभ्यो भूतेभ्यः सिध्मलम्भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनँव्यृद्धयाऽअपगल्भꣳ सꣳशराय प्रच्छिदम् १७

अक्षराजाय कितवङ्कृतायादिनवदर्शन्त्रेतायै कल्पिनन्द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुम्मृत्यवे गोव्यच्छमन्तकाय गोघातङ्क्षुधे यो गाँविकृन्तन्तम्भिक्षमाणऽउपतिष्ठति दुष्कृताय चरकाचार्यम्पाप्मने सैलगम् १८

प्रतिश्रुत्कायाऽअर्तनङ्घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकꣳ
शब्दायाडम्बराघातम्महसे वीणावादङ्क्रोशाय तूणवध्ममवरस्पराय
शङ्खध्मँवनाय वनपमन्यतोरण्याय दावपम् १९

नर्माय पुँश्चलूꣳ हसाय कारिँयादसे
शाबल्याङ्ग्रामण्यङ्गणकमभिक्रोशकन्तान्महसे
वीणावादम्पाणिघ्नन्तूणवध्मन्तान्नृतायानन्दाय तलवम् २०

अग्नये पीवानम्पृथिव्यै पीठसर्पिणँवायवे चाण्डालमन्तरिक्षाय
वꣳशनर्तिनन्दिवे खलतिꣳ सूर्याय हर्यक्षन्नक्षत्रेभ्यः किर्मिरञ्चन्द्रमसे
किलासमह्ने शुक्लम्पिङ्गाक्षꣳ रात्र्यै कृष्णम्पिङ्गाक्षम् २१

अथैतानष्टौ
विरूपानालभतेतिदीर्घञ्चातिह्रस्वञ्चातिस्थूलञ्चातिकृशञ्चातिशुक्लञ्चा
तिकृष्णञ्चातिकुल्वञ्चातिलोमशञ्च ।
अशूद्राऽअब्राह्मणास्ते प्राजापत्याः ।
मागधः पुँश्चली कितवः क्लीबोशूद्राऽअब्राह्मणास्ते प्राजापत्याः २२

इति त्रिंशोऽध्यायः

# अथैकत्रिंशोऽध्यायः

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳ सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम् १

पुरुष एवेदꣳ सर्वँयद्भूतँयच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति २

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोस्य विश्वा भूतानि त्रिपादस्यामृतन्दिवि ३

त्रिपादूर्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ।
ततो विष्वङ्व्यक्रामत्साशनानशनेऽअभि ४

ततो विराडजायत विराजोऽअधि पूरुषः ।
स जातोऽअत्यरिच्यत पश्चाद्भूमिमथो पुरः ५

तस्माद्यज्ञात्सर्वहुतः सम्भृतम्पृषदाज्यम् ।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ६

तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ७

तस्मादश्वाऽअजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः ८

तँयज्ञम्बुर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः ।
तेन देवाऽअयजन्त साध्याऽऋषयश्च ये ९

यत्पुरुषँव्यदधुः कतिधा व्यकल्पयन् ।
मुखङ्किमस्यासीत्किम्बाहू किमूरू पादाऽउच्येते १०

ब्राह्मणोस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याँ शूद्रोऽअजायत ११

चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत १२

नाभ्याऽआसीदन्तरिक्षँ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ऽअकल्पयन् १३

यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः १४

सप्तास्यासन्परिधयस्त्रिः सप्त समिधः कृताः ।
देवा यद्यज्ञन्तन्वानाऽअबध्नन्पुरुषम्पशुम् १५

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकम्महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः १६

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे १७

वेदाहमेतम्पुरुषम्महान्तमादित्यवर्णन्तमसः परस्तात् ।
तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय १८

प्रजापतिश्चरति गर्भेऽअन्तरजायमानो बहुधा विजायते ।
तस्य योनिम्परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा १९

यो देवेभ्यऽआतपति यो देवानाम्पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये २०

रुचम्ब्राह्मञ्जनयन्तो देवाऽअग्रे तदब्रुवन् ।
यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे २१

श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्
।
इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण २२

इत्येकत्रिंशोऽध्यायः

## अथ द्वात्रिंशोऽध्यायः

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रन्तद्ब्रह्म ताऽआपः स प्रजापतिः १

सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि ।
नैनमूर्ध्वन्न तिर्यञ्चन्न मध्ये परिजग्रभत् २

न तस्य प्रतिमाऽअस्ति यस्य नाम महद्यशः ।
हिरण्यगर्भऽइत्येष मा मा हिꣳसीदित्येषा यस्मान्न जातऽइत्येषः ३
गलितमन्त्राः--
हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥
यः प्राणतो निमिषतो महित्वैकऽइद्राजा जगतो बभूव ।
यऽईशेऽअस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
यस्येमे हिमवन्तो महित्त्वा यस्य समुद्रꣳ रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम ॥
यऽआत्मदा बलदा यस्य विश्वऽउपासते प्रशिषँयस्य देवाः ।
यस्य छायामृतँयस्य मृत्युः कस्मै देवाय हविषा विधेम ॥
मा मा हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा व्यानट्
।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा विधेम ॥
यस्मान्न जातः परोऽअन्नयोऽअस्ति यऽआविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥
इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षञ्चक्रतुरग्रऽएतम् ।
तयोरहमनु भक्षम्भक्षयामि वाग्देवी जुषाणा सोमस्य तृप्यतु सह

प्राणेन स्वाहा ॥
एषो ह देवः प्रदिशोनु सर्वाः पूर्वो ह जातः सऽउ गर्भेऽअन्तः ।
सऽएव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ४

यस्माज्जातन्न पुरा किञ्चनैव यऽआबभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ५

येन द्यौरुग्रा पृथिवी च दृढा येन स्व स्तभितँयेन नाकः ।
योऽअन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ६

यङ्क्रन्दसीऽअवसा तस्तभानेऽअभ्यैक्षेताम्मनसा रेजमाने ।
यत्राधि सूरऽउदितो विभाति कस्मै देवाय हविषा विधेम ।
आपो ह यद्बृहतीर्यश्चिदापः ७
गलितमन्त्रौ --
आपो ह यद्बृहतीर्विश्वमायन्गर्भन्दधाना जनयन्तीरग्निम् ।
ततो देवानाꣳ समवर्ततासुरेकः कस्मै देवाय हविषा विधेम ॥
यश्चिदापो महिना पर्यपश्यद्दक्षन्दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देवऽएकऽआसीत्कस्मै देवाय हविषा विधेम ॥

वेनस्तत्पश्यन्निहितङ्गुहा सद्यत्र विश्वम्भवत्येकनीडम् ।
तस्मिन्निदꣳ सञ्च वि चैति सर्वꣳ सऽओतः प्रोतश्च विभूः प्रजासु ८

प्र तद्वोचेदमृतन्नु विद्वान्गन्धर्वो धाम विभृतङ्गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ९

स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।

यत्र देवाऽअमृतमानशानास्तृतीये धामन्नध्यैरयन्त १०

परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश ११

परि द्यावापृथिवी सद्यऽइत्वा परि लोकान्परि दिशः परि स्वः ।
ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासीत् १२

सदसस्पतिमद्भुतम्प्रियमिन्द्रस्य काम्यम् ।
सनिम्मेधामयासिषँ स्वाहा १३
याम्मेधान्देवगणाः पितरश्चोपासते ।
तया मामद्य मेधयाग्ने मेधाविनङ्कुरु स्वाहा १४

मेधाम्मे वरुणो ददातु मेधामग्निः प्रजापतिः ।
मेधामिन्द्रश्च वायुश्च मेधान्धाता ददातु मे स्वाहा १५

इदम्मे ब्रह्म च क्षत्रञ्चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमान्तस्यै ते स्वाहा १६

इति द्वात्रिंशोऽध्यायः

# अथ त्रयस्त्रिंशोऽध्यायः

अस्याजरासो दमामरित्राऽअर्चद्धूमासोऽअग्नयः पावकाः ।
श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः १

हरयो धूमकेतवो वातजूताऽउप द्यवि ।
यतन्ते वृथगग्नयः २

यजा नो मित्रावरुणा यजा देवाँ२॥ऽऋतम्बृहत् ।
अग्ने यक्षि स्वन्दमम् ३

युक्ष्वा हि देवहूतमाँ२॥ऽअश्वाँ२॥ऽअग्ने रथीरिव ।
नि होता पूर्व्यः सदः ४

द्वे विरूपे चरतः स्वर्थेऽअन्यान्या वत्समुपधापयेते ।
हरिरन्यस्याम्भवति स्वधावाञ्छुक्रोऽअन्यस्यान्ददृशे सुवर्चाः ५
अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रँविभ्वँविशेविशे ६

त्रीणि शता त्री सहस्राण्यग्निन्त्रिꣳशच्च देवा नव चासपर्यन् ।
औक्षन्घृतैरस्तृणन्बर्हिरस्माऽआदिद्धोतारन्न्यसादयन्त ७

मूर्धानन्दिवोऽअरतिम्पृथिव्या वैश्वानरमृतऽआ जातमग्निम् ।
कविꣳ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः ८

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।

समिद्धः शुक्रऽआहुतः ९

विश्वेभिः सोम्यम्मध्वग्नऽइन्द्रेण वायुना ।
पिबा मित्रस्य धामभिः १०

आ यदिषे नृपतिन्तेजऽआनट्शुचि रेतो निषिक्तन्द्यौरभीके ।
अग्निः शर्धमनवद्यँयुवानᳪ स्वाध्यञ्जनयत्सूदयञ्च ११

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सञ्जास्पत्यᳪ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाᳪसि १२

त्वाᳪ हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने ।
इन्द्रन्न त्वा शवसा देवता वायुम्पृणन्ति राधसा नृतमाः १३

त्वेऽअग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् १४
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
आसीदन्तु बर्हिषि मित्रोऽअर्यमा प्रातर्यावाणोऽअध्वरम् १५

विश्वेषामदितिर्यज्ञियानाँविश्वेषामतिथिर्मानुषाणाम् ।
अग्निर्देवानामवऽआवृणानः सुमृडीको भवतु जातवेदाः १६

महोऽअग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये ।
श्रेष्ठे स्याम सवितुः सवीमनि तद्देवानामवोऽअद्या वृणीमहे १७

आपश्चित्पिप्यु स्तर्यो न गावो नक्षन्नृतञ्जरितारस्तऽइन्द्र ।

याहि वायुर्न नियुतो नोऽअच्छा त्वᳬं हि धीभिर्दयसे वि वाजान्
१८

गावऽउपावतावतम्मही यज्ञस्य रप्सुदा ।
उभा कर्णा हिरण्यया १९

यदद्य सूरऽउदितेनागा मित्रोऽअर्यमा ।
सुवाति सविता भगः २०

आ सुते सिञ्चत श्रियᳬं रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् ।
तम्प्रत्नथायँवेनः २१
गलितमन्त्रौ --
तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् ।
प्रतीचीनँवृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्धसे ॥
अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ॥

आतिष्ठन्तम्परि विश्वेऽअभूषञ्छ्रियो वसानश्चरति स्वरोचिः ।
महत्तद्वृष्णोऽअसुरस्य नामा विश्वरूपोऽअमृतानि तस्थौ २२

प्र वो महे मन्दमानायान्धसोर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखᳬं सहो महि श्रवो नृम्णञ्च रोदसी सपर्यतः २३

बृहन्निदिध्मऽएषाम्भूरि शस्तम्पृथुः स्वरुः ।
येषामिन्द्रो युवा सखा २४

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।
महाँ२॥ऽअभिष्टिरोजसा २५

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यँ्समुशधग्वनेष्वाविर्धेनाऽअकृणोद्राम्याणाम् २६

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किन्तऽइत्था ।
सम्पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्तेऽअस्मे ।
महाँ२॥ऽइन्द्रो यऽओजसा कदाचन स्तरीरसि कदाचन प्रयुच्छसि
२७

गलितमन्त्राः --
महाँ२॥ऽइन्द्रो यऽओजसा पर्जन्यो वृष्टिमाँ२॥ऽइव ।
स्तोमैर्वत्सस्य वावृधे ॥
कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूयऽइन्नु ते दानन्देवस्य पृच्यते ॥
कदाचन प्रयुच्छस्युभे निपासि जन्मनी ।
तुरीयादित्य सवनन्तऽइन्द्रियमातस्थावमृतन्दिवि ॥

आ तत्तऽइन्द्रायवः पनन्ताभि यऽऊर्वङ्गोमन्तन्तितृत्सान् ।
सकृत्स्वँ्ये पुरुपुत्राम्महीँ सहस्रधाराम्बृहतीन्दुदुक्षन् २८

इमान्ते धियम्प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्तऽआनजे ।
तमुत्सवे च प्रसवे च सासहिमिन्द्रन्देवासः शवसामदन्ननु २९

विभ्राड्बृहत्पिबतु सोम्यम्मध्वायुर्दधद्यज्ञपतावविहुतम् ।
वातजूतो योऽअभिरक्षति त्मना प्रजाः पुपोष पुरुधा विराजति ३०

उदु त्यञ्जातवेदसन्देवँवहन्ति केतवः ।
दृशे विश्वाय सूर्यम् ३१

येना पावक चक्षसा भुरण्यन्तञ्जनाँ॥ऽअनु ।
त्वँवरुण पश्यसि ३२

दैव्यावध्वर्यूऽआगतꣳ रथेन सूर्यत्वचा ।
मध्वा यज्ञꣳ समञ्जाथे ।
तम्प्रत्नथायँवेनश्चित्रन्देवानाम् ३३

गलितमन्त्राः --
तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् ।
प्रतीचीनँवृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्धसे ॥
अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ॥
चित्रन्देवानामुदगादनीकञ्चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्यऽआत्मा जगतस्तस्थुषश्च ॥

आ नऽइडाभिर्विदथे सुशस्ति विश्वानरः सविता देवऽएतु ।
अपि यथा युवानो मत्सथा नो विश्वञ्जगदभिपित्वे मनीषा ३४

यदद्य कच्च वृत्रहन्नुदगाऽअभि सूर्य ।
सर्वन्तदिन्द्र ते वशे ३५

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमाभासि रोचनम् ३६

तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्या कर्तोर्विततꣳ सञ्जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ३७

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपङ्कृणुते द्योरुपस्थे ।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ३८

बण्महाँ॥ऽअसि सूर्य बडादित्य महाँ॥ऽअसि ।
महस्ते सतो महिमा पनस्यतेद्धा देव महाँ॥ऽअसि ३९

बट्सूर्य श्रवसा महाँ॥ऽअसि सत्रा देव महाँ॥ऽअसि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ४०

श्रायन्तऽइव सूर्यंविश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमानऽओजसा प्रति भागन्न दीधिम ४१

अद्या देवाऽउदिता सूर्यस्य निरꣳहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः ४२

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ४३

प्रवावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिटऽइयाते ।

विशामुक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ४४

इन्द्रवायू बृहस्पतिम्मित्राग्निम्पूषणम्भगम् ।
आदित्यान्मारुतङ्गणम् ४५

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।
करतान्नः सुराधसः ४६

अधि नऽइन्द्रैषाँविष्णो सजात्यानाम् ।
इता मरुतोऽअश्विना ।
तम्प्रत्नथायँवेनो ये देवासऽआ नऽइडाभिर्विश्वेभिः
सोम्यम्मध्वोमासश्चर्षणीधृतः ४७

गलितमन्त्राः --
तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदँ स्वर्विदम् ।
प्रतीचीनँवृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्धसे ॥
अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाँ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ॥
ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमञ्जुषध्वम् ॥
आ नऽइडाभिर्विदथे सुशस्ति विश्वानरः सविता देवऽएतु ।
अपि यथा युवानो मत्सथा नो विश्वञ्जगदभिपित्वे मनीषा ॥
विश्वेभिः सोम्यम्मध्वग्नऽइन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥
ओमासश्चर्षणीधृतो विश्वे देवासऽआगत । दाश्वाँसो दाशुषः सुतम् ॥

अग्नऽइन्द्र वरुण मित्र देवाः शर्धः प्रयन्त मारुतोत विष्णो ।
उभा नासत्या रुद्रोऽअध ग्नाः पूषा भगः सरस्वती जुषन्त ४८

इन्द्राग्नी मित्रावरुणादितिꣳ स्वः पृथिवीन्द्याम्मरुतः
पर्वताꣳ२॥ऽअपः ।
हुवे विष्णुम्पूषणम्ब्रह्मणस्पतिम्भगन्नु शꣳसꣳ सवितारमूतये ४९

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।
यः शꣳसते स्तुवते धायि पज्रऽइन्द्रज्येष्ठाऽअस्माꣳ२॥ऽअवन्तु देवाः
५०

अर्वाञ्चोऽअद्या भवता यजत्राऽआ वो हार्दि भयमानो व्ययेयम् ।
त्राध्वन्नो देवा निजुरो वृकस्य त्राध्वङ्कर्तादवपदो यजत्राः ५१

विश्वेऽअद्य मरुतो विश्वऽऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवाऽअवसागमन्तु विश्वमस्तु द्रविणँवाजोऽअस्मे ५२

विश्वे देवाः शृणुतेमꣳ हवम्मे येऽअन्तरिक्षे यऽउप द्यवि ष्ठ ।
येऽअग्निजिह्वाऽउत वा यजत्राऽआसद्यास्मिन्बर्हिषि मादयध्वम् ५३

देवेभ्यो हि प्रथमँयज्ञियेभ्योमृतत्वꣳ सुवसि भागमुत्तमम् ।
आदिद्दामानꣳ सवितर्व्यूर्णुषेनूचीना जीविता मानुषेभ्यः ५४

प्र वायुमच्छा बृहती मनीषा बृहद्रयिँविश्ववारꣳ रथप्राम् ।
द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो ५५

इन्द्रवायूऽइमे सुताऽउप प्रयोभिरागतम् ।
इन्दवो वामुशन्ति हि ५६

मित्रꣳ हुवे पूतदक्षँवरुणञ्च रिशादसम् ।
धियङ्घृताचीꣳ साधन्ता ५७

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः ।
आयातꣳ रुद्रवर्तनी ।
तम्प्रत्नथायँवेनः ५८

गलितमन्त्रौ --
तम्प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम् ।
प्रतीचीनँवृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्धसे ॥
अयँवेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ सङ्गमे सूर्यस्य शिशुन्न विप्रा मतिभी रिहन्ति ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः ।
अग्रन्नयत्सुपद्यक्षराणामच्छा रवम्प्रथमा जानती गात् ५९

नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरऽएतारमग्नेः ।
एमेनमवृधन्नमृताऽअमर्त्यँवैश्वानरङ्क्षैत्रजित्याय देवाः ६०

उग्रा विघनिना मृधऽइन्द्राग्नी हवामहे ।
ता नो मृडातऽईदृशे ६१

उपास्मै गायता नरः पवमानायेन्दवे ।
अभि देवाँ॥ऽइयक्षते ६२

ये त्वाहिहत्ये मघवन्नवर्धन्ये शाम्बरे हरिवो ये गविष्टौ ।
ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमꣳ सगणो मरुद्भिः ६३

जनिष्ठाऽउग्रः सहसे तुराय मन्द्रऽओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रम्मरुतश्चिदत्र माता यद्वीरन्दधनद्धनिष्ठा ६४

आ तू नऽइन्द्र वृत्रहन्नस्माकमर्धमागहि ।
महान्महीभिरूतिभिः ६५

त्वमिन्द्र प्रतूर्तिष्वभि विश्वाऽअसि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वन्तूर्य तरुष्यतः ६६

अनु ते शुष्मन्तुरयन्तमीयतुः क्षोणी शिशुन्न मातरा ।
विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रँयदिन्द्र तूर्वसि ६७

यज्ञो देवानाम्प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वोर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् ६८

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नोऽअघशꣳसऽईशत ६९

प्रवीरया शुचयो दद्रिरे वामध्वर्युभिर्मधुमन्तः सुतासः ।
वह वायो नियुतो याह्यच्छा पिबा सुतस्यान्धसो मदाय ७०

गावुऽउपावतावुतम्मुही युज्ञस्य रुप्सुदा ।
उुभा कर्णा हिरुण्यया ७१

काव्ययोराुजानेषु क्रत्वा दक्षस्य दुरोणे ।
रिुशादसा सुधस्थुऽत्र्या ७२

दैव्यावध्वर्यूऽत्र्यागतुꣳ रथेन सूर्यत्वचा ।
मध्वा युज्ञꣳ समञ्जाथे ।
तम्प्रत्नथायँवेुनः ७३

गलितमन्त्रौ --
तम्प्रत्नथा पूर्वथा विुश्वथेमथा ज्येष्ठतातिम्बर्हिुषदꣳ स्वुर्विदम् ।
प्रतीुचीनँवृजनन्दोहसे धुनिमाुशुञ्जयन्तुमनु यासु वर्धसे ॥
त्र्ययँवेनश्चोदयुत्पृश्निगर्भा ज्योतिर्जरायू रजसो विुमाने ।
इुममुपाꣳ संङ्गुमे सूर्यस्यु शिशुन्न विप्रा मुतिभी रिहन्ति ॥

तिुरश्चीनो वितंतो रुश्मिरेषामुधः स्विदुासी३दुपरि स्विदासी३त् ।
रेुतोधाऽत्र्यासन्महिुमानऽत्र्यासन्त्स्वुधाऽत्र्यवस्तात्प्रयतिः पुरस्तात् ७४

त्र्या रोदसीऽत्र्यपृणुदा स्वर्मुहज्जातँयदेनमुपसोऽत्र्यधारयन् ।
सोऽत्र्यध्वुराय परिणीयते कुविरत्यो न वाजसातये चनोहितः ७५

उुक्थेभिर्वृत्रुहन्तमा या मन्दुाना चिुदा गिरा ।
त्र्याुङ्गूषैराविवासतः ७६

उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये ।
सुमृडीका भवन्तु नः ७७

ब्रह्माणि मे मतयः शꣳ सुतासः शुष्मऽइयर्ति प्रभृतो मेऽअद्रिः ।
आशासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नोऽअच्छ ७८

अनुत्तमा ते मघवन्नकिर्नु न त्वावाꣳ२ऽअस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ७९

तदिदास भुवनेषु ज्येष्ठँयतो जज्ञऽउग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो निरिणाति शत्रूननु यँविश्वे मदन्त्यूमाः ८०

इमाऽउ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोभि स्तोमैरनूषत ८१

यस्यायँविश्वऽआर्यो दासः शेवधिपाऽअरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सोऽअज्यते रयिः ८२

अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्रऽइव पप्रथे ।
सत्यः सोऽअस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ८३

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नोऽअघशꣳसऽईशत
८४

आ नो यज्ञन्दिविस्पृशँवायो याहि सुमन्मभिः ।

अन्तः पवित्रऽउपरि श्रीणानोयꣳ शुक्रोऽअयामि ते ८५

इन्द्रवायू सुसन्दृशा सुहवेह हवामहे ।
यथा नः सर्वऽइज्जनोनमीवः सङ्गमे सुमनाऽअसत् ८६

ऋधगित्था स मर्त्यः शशमे देवतातये ।
यो नूनम्मित्रावरुणावभिष्टयऽआचक्रे हव्यदातये ८७

आयातमुपभूषतम्मध्वः पिबतमश्विना ।
दुग्धम्पयो वृषणा जेन्यावसू मा नो मर्धिष्टमागतम् ८८

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरन्नर्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तु नः ८९

चन्द्रमाऽअप्स्वन्तरा सुपर्णो धावते दिवि ।
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहꣳ हरिरेति कनिक्रदत् ९०

देवन्देवँवोवसे देवन्देवमभिष्टये ।
देवन्देवꣳ हुवेम वाजसातये गृणन्तो देव्या धिया ९१

दिवि पृष्टोऽअरोचताग्निर्वैश्वानरो बृहन् ।
क्ष्मया वृधानऽओजसा चनोहितो ज्योतिषा बाधते तमः ९२

इन्द्राग्नीऽअपादियम्पूर्वागात्पद्वतीभ्यः ।
हित्वी शिरो जिह्वया वावदच्चरत्त्रिꣳशत्पदान्यक्रमीत् ९३

देवासो हि ष्मा मनवे समन्यवो विश्वे साकꣳ सरातयः ।
ते नोऽअद्य तेऽअपरन्तुचे तु नो भवन्तु वरिवोविदः ९४

अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।
देवास्तऽइन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ९५

प्र वऽइन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रꣳ हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ९६

अस्येदिन्द्रो वावृधे वृष्ण्यꣳ शवो मदे सुतस्य विष्णवि ।
अद्या तमस्य महिमानमायवोनुष्टुवन्ति पूर्वथा ।
इमाऽउ त्वा यस्यायमयꣳ सहस्रमूर्ध्वऽऊ षु णः ९७

गलितमन्त्राः --
इमाऽउ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोभि स्तोमैरनूषत ॥
यस्यायँविश्वऽआर्यो दासः शेवधिपाऽअरिः ।
तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सोऽअज्यते रयिः ॥
अयꣳ सहस्रमृषिभिः सहस्कृतः समुद्रऽइव पप्रथे ।
सत्यः सोऽअस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥
ऊर्ध्वऽऊ षु णऽऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
इति त्रयस्त्रिंशोऽध्यायः

# अथ चतुस्त्रिंशोऽध्यायः

यज्जाग्रतो दूरमुदैति दैवन्तदु सुप्तस्य तथैवैति ।
दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मे मनः शिवसङ्कल्पमस्तु १

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वँयक्षमन्तः प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु २

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतम्प्रजासु ।
यस्मान्नऽऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ३

येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु ४

यस्मिन्नृचः साम यजूँषि यस्मिन्प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिँश्चित्तꣳ सर्वमोतम्प्रजानान्तन्मे मनः शिवसङ्कल्पमस्तु ५

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेभीशुभिर्वाजिनऽइव ।
हृत्प्रतिष्ठँयदजिरञ्जविष्ठन्तन्मे मनः शिवसङ्कल्पमस्तु ६
पितुन्नु स्तोषम्महो धर्माणन्तविषीम् ।
यस्य त्रितो व्योजसा वृत्रँविपर्वमर्दयत् ७

अन्विदनुमते त्वम्मन्यासै शञ्च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र णऽआयूँषि तारिषः ८

अनु नोद्यानुमतिर्यज्ञन्देवेषु मन्यताम् ।

अग्निश्च हव्यवाहनो भवतन्दाशुषे मयः ९

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतम्प्रजान्देवि दिदिड्ढि नः १०

पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः ।
सरस्वती तु पञ्चधा सो देशेभवत्सरित् ११

त्वमग्ने प्रथमोऽअङ्गिराऽऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोजायन्त मरुतो भ्राजदृष्टयः १२

त्वन्नोऽअग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य ।
त्राता तोकस्य तनये गवामस्यनिमेषꣳ रक्षमाणस्तव व्रते १३

उत्तानायामवभरा चिकित्वान्त्सद्यः प्रवीता वृषणञ्जजान ।
अरुषस्तूपो रुशदस्य पाजऽइडायास्पुत्रो वयुनेजनिष्ट १४

इडायास्त्वा पदे वयन्नाभा पृथिव्याऽअधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे १५
प्रमन्महे शवसानाय शूषमाङ्गूषङ्गिर्वणसेऽअङ्गिरस्वत् ।
सुवृक्तिभि स्तुवतऽऋग्मियायार्चामार्कन्नरे विश्रुताय १६

प्र वो महे महि नमो भरध्वमाङ्गूष्यꣳ शवसानाय साम ।
येना नः पूर्वे पितरः पदज्ञाऽअर्चन्तोऽअङ्गिरसो गाऽअविन्दन् १७

इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमन्दधति प्रयाꣳसि ।

तितिक्षन्तेऽअभिशस्तिञ्जनानामिन्द्र त्वदा कश्चन हि प्रकेतः १८

न ते दूरे परमा चिद्रजाᳫंस्या तु प्रयाहि हरिवो हरिभ्याम् ।
स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधानेऽअग्नौ १९

अषाढँयुत्सु पृतनासु पप्रिᳫं स्वर्षामप्साँवृजनस्य गोपाम् ।
भरेषुजाᳫं सुक्षितिᳫं सुश्रवसञ्जयन्तन्त्वामनुमदेम सोम २०

सोमो धेनुᳫं सोमोऽअर्वन्तमाशुᳫं सोमो वीरङ्कर्मण्यन्ददाति ।
सादन्यँविदथ्यᳫं सभेयम्पितृश्रवणँयो ददाशदस्मै २१

त्वमिमाऽओषधीः सोम विश्वास्त्वमपोऽअजनयस्त्वङ्गाः ।
त्वमाततन्थोर्वन्तरिक्षन्त्वञ्ज्योतिषा वि तमो ववर्थ २२

देवेन नो मनसा देव सोम रायो भागᳫं सहसावन्नभियुध्य ।
मा त्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ २३

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देवऽआगाद्दधद्रत्ना दाशुषे वार्याणि २४

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवीऽअन्तरीयते ।
अपामीवाम्बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति २५

हिरण्यहस्तोऽअसुरः सुनीथः सुमृडीकः स्ववा यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषङ्गृणानः २६

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृताऽअन्तरिक्षे ।
तेभिर्नोऽअद्य पथिभिः सुगेभी रक्षा च नोऽअधि च ब्रूहि देव २७

उभा पिबतमश्विनोभा नः शर्म यच्छतम् ।
अविद्रियाभिरूतिभिः २८
अप्नस्वतीमश्विना वाचमस्मे कृतन्नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येवसे निह्वये वाँवृधे च नो भवतँवाजसातौ २९

द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः ३०

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतम्मर्त्यञ्च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ३१

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः ।
दिवः सदाꣳसि बृहती वितिष्ठसऽआ त्वेषँवर्तते तमः ३२

उषस्तच्चित्रमाभरास्मभ्यँवाजिनीवति ।
येन तोकञ्च तनयञ्च धामहे ३३

प्रातरग्निम्प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना ।
प्रातर्भगम्पूषणम्ब्रह्मणस्पतिम्प्रातः सोममुत रुद्रꣳ हुवेम ३४

प्रातर्जितम्भगमुग्रꣳ हुवेम वयम्पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यम्मन्यमानस्तुरश्चिद्राजा चिद्यम्भगम्भक्षीत्याह ३५

भग प्रणेतर्भग सत्यराधो भगेमान्धियमुदवा ददन्नः ।
भग प्र नो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ३६

उतेदानीम्भगवन्तः स्यामोत प्रपित्वऽउत मध्येऽअह्नाम् ।
उतोदिता मघवन्त्सूर्यस्य वयन्देवानाꣳ सुमतौ स्याम ३७

भगऽएव भगवाँ२॥ऽअस्तु देवास्तेन वयम्भगवन्तः स्याम ।
तन्त्वा भग सर्वऽइज्जोहवीति स नो भग पुरऽएता भवेह ३८

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय ।
अर्वाचीनँवसुविदम्भगन्नो रथमिवाश्वा वाजिनऽआवहन्तु ३९

अश्वावतीर्गोमतीर्नऽउषासो वीरवतीः सदमुच्छन्तु भद्राः ।
घृतन्दुहाना विश्वतः प्रपीता यूयम्पात स्वस्तिभिः सदा नः ४०

पूषन्तव व्रते वयन्न रिष्येम कदाचन ।
स्तोतारस्तऽइह स्मसि ४१

पथस्पथः परिपतिँवचस्या कामेन कृतोऽअभ्यानडर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियन्धियꣳ सीषधाति प्र पूषा ४२

त्रीणि पदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः ।
अतो धर्माणि धारयन् ४३

तद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते ।
विष्णोर्यत्परमम्पदम् ४४

घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते ऽअजरे भूरिरेतसा ४५

ये नः सपत्ना ऽअप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा ऽआदित्या ऽउपरिस्पृशम्मोग्रञ्चेत्तारमधिराजमक्रन् ४६

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातम्मधुपेयमश्विना ।
प्रायुस्तारिष्टन्नी रपाꣳसि मृक्षतꣳ सेधतन्द्वेषो भवतꣳ सचाभुवा ४७

एष व स्तोमो मरुत ऽइयङ्गीर्मान्दार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयाँविद्यामेषँवृजनञ्जीरदानुम् ४८

सहस्तोमाः सहछन्दस ऽआवृतः सहप्रमा ऽऋषयः सप्त दैव्याः ।
पूर्वेषाम्पन्थामनुदृश्य धीरा ऽअन्वालेभिरे रथ्यो न रश्मीन् ४९

आयुष्यँवर्चस्यꣳ रायस्पोषमौद्भिदम् ।
इदꣳ हिरण्यँवर्चस्वज्जैत्रायाविशतादु माम् ५०
न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्
।
यो बिभर्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स
मनुष्येषु कृणुते दीर्घमायुः ५१

यदाबध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः ।
तन्म ऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ५२

उत नोहिर्बुध्न्यः शृणोत्वजऽएकपात्पृथिवी समुद्रः ।
विश्वे देवाऽऋतावृधो हुवाना स्तुता मन्त्राः कविशस्ताऽअवन्तु ५३

इमा गिरऽआदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रोऽअर्यमा भगो नस्तुविजातो वरुणो दक्षोऽअꣳशः ५४

सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ५५

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।
उपप्रयन्तु मरुतः सुदानवऽइन्द्र प्राशूर्भवा सचा ५६

प्र नूनम्ब्रह्मणस्पतिर्मन्त्रँवदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रोऽअर्यमा देवाऽओकाꣳसि चक्रिरे ५७

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयञ्च जिन्व ।
विश्वन्तद्भद्रँयदवन्ति देवा बृहद्वदेम विदथे सुवीराः ।
यऽइमा विश्वा विश्वकर्मा यो नः पितान्नपतेन्नस्य नो देहि ५८

गलितमन्त्राः --
यऽइमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः ।
सऽआशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ॥ऽआविवेश ॥
विश्वकर्मा विमनाऽआद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऽऋषीन्परऽएकमाहुः ॥
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा ।

यो देवानांन्नामधाऽएकंऽएव तꣳ सम्प्रश्नम्भुवना यन्त्यन्या ॥
अन्नपतेन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्रप्र दातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥
इति चतुस्त्रिंशोऽध्यायः

# अथ पञ्चत्रिंशोऽध्यायः

अपेतो यन्तु पणयोसुम्ना देवपीयवः ।
अस्य लोकः सुतावतः ।
द्युभिरहोभिरक्तुभिर्व्यक्तँयमो ददात्ववसानमस्मै १

सविता ते शरीरेभ्यः पृथिव्याँल्लोकमिच्छतु ।
तस्मै युज्यन्तामुस्रियाः २

वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ।
विमुच्यन्तामुस्रियाः ३

अश्वत्थे वो निषदनम्पर्णे वो वसतिष्कृता ।
गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ४
सविता ते शरीराणि मातुरुपस्थऽआवपतु ।
तस्मै पृथिवि शम्भव ५

प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसौ ।
अप नः शोशुचदघम् ६

परम्मृत्योऽअनुपरेहि पन्थाँयस्तेऽअन्यऽइतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाँ रीरिषो मोत वीरान् ७

शँवातः शँ हि ते घृणिः शन्ते भवन्त्विष्टकाः ।
शन्ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ८

कल्पन्तान्ते दिशस्तुभ्यमापः शिवतमास्तुभ्यम्भवन्तु सिन्धवः ।
अन्तरिक्षꣳ शिवन्तुभ्यङ्कल्पन्तान्ते दिशः सर्वाः ९

अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः ।
अत्रा जहीमोऽशिवा येऽअसञ्छिवान्वयमुत्तरेमाभि वाजान् १०

अपाघमप किल्विषमप कृत्यामपो रपः ।
अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ११

सुमित्रिया नऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः १२

अनड्वाहमन्वारभामहे सौरभेयꣳ स्वस्तये ।
स नऽइन्द्रऽइव देवेभ्यो वह्निः सन्तारणो भव १३
उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् ।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् १४

इमञ्जीवेभ्यः परिधिन्दधामि मैषान्नु गादपरोऽअर्थमेतम् ।
शतञ्जीवन्तु शरदः पुरूचीरन्तर्मृत्युन्दधताम्पर्वतेन १५

अग्नऽआयूꣳषि पवसऽआ सुवोर्जमिषञ्च नः ।
आरे बाधस्व दुच्छुनाम् १६

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतम्पीत्वा मधु चारु गव्यम्पितेव पुत्रमभिरक्षतादिमान्त्स्वाहा १७

परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रवः कऽइमाँ२॥ऽआदधर्षति १८

क्रव्यादमग्निम्प्रहिणोमि दूरँयमराज्यङ्गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यँवहतु प्रजानन् १९

वह वपाञ्जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके ।
मेदसः कुल्याऽउप तान्स्रवन्तु सत्याऽएषामाशिषः सन्नमन्ताँ
स्वाहा २०

स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ।
अप नः शोशुचदघम् २१

अस्मात्त्वमधिजातोसि त्वदयञ्जायताम्पुनः ।
असौ स्वर्गाय लोकाय स्वाहा २२

इति पञ्चत्रिंशोऽध्यायः

# अथ षट्त्रिंशोऽध्यायः

ऋचँवाचम्प्रपद्ये मनो यजुः प्रपद्ये साम प्राणम्प्रपद्ये चक्षुः श्रोत्रम्प्रपद्ये ।
वागोजः सहौजो मयि प्राणापानौ १

यन्मे च्छिद्रञ्चक्षुषो हृदयस्य मनसो वातितृणम्बृहस्पतिर्मे तद्दधातु ।
शन्नो भवतु भुवनस्य यस्पतिः २

भूर्भुवः स्वः । तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ३

कया नश्चित्रऽआभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ४

कस्त्वा सत्यो मदानाम्मꣳहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे वसु ५

अभी षु णः सखीनामविता जरितृणाम् ।
शतम्भवास्यूतिभिः ६

कया त्वन्नऽऊत्याभिप्रमन्दसे वृषन् ।
कया स्तोतृभ्यऽआभर ७

इन्द्रो विश्वस्य राजति ।
शन्नोऽअस्तु द्विपदे शञ्चतुष्पदे ८

शन्नो॑ मि॒त्रः शँवरु॑णः शन्नो॑ भवत्वर्य्य॒मा ।
शन्न॒ऽइन्द्रो॒ बृह॒स्पति॑ः शन्नो॒ विष्णु॑रुरुक्र॒मः ९

शन्नो॒ वात॑ः पवता॒ꣳ शन्न॑स्तपतु॒ सूर्य॑ः ।
शन्न॑ः कनि॑क्रदद्दे॒वः प॒र्जन्यो॑ऽअ॒भिव॑र्षतु १०

अहा॑नि॒ शम्भ॑वन्तु नः॒ शꣳ रात्री॑ः प्रति॑धीयताम् ।
शन्न॑ऽइन्द्राग्नी भ॑वता॒मवो॑भिः॒ शन्न॒ऽइन्द्रा॒वरु॑णा रा॒तह॑व्या ।
शन्न॑ऽइन्द्रापू॒षणा॒ वाज॑साता॒ शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शँयोः ११

शन्नो॑ दे॒वीर॒भिष्ट॑य॒ऽआपो॑ भवन्तु पी॒तये॑ ।
शँयोर॒भिस्र॑वन्तु नः १२

स्यो॒ना पृ॑थिवि नो भवानृक्ष॒रा नि॒वेश॑नी ।
यच्छा॑ नः॒ शर्म॑ स॒प्रथा॑ः १३

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ऽऊ॒र्जे द॑धातन ।
म॒हे रणा॑य॒ चक्ष॑से १४

यो व॑ः शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह न॑ः ।
उ॒श॒तीरि॑व मा॒तर॑ः १५
तस्मा॒ऽअर॑ङ्गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ ।
आपो॑ ज॒नय॑था च नः १६

द्यौः शान्ति॑र॒न्तरि॑क्ष॒ꣳ शान्ति॑ः पृथि॒वी शान्ति॒राप॒ः शान्ति॒रोष॑धयः॒
शान्ति॑ः ।

वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः
शान्तिरेव शान्तिः सा मा शान्तिरेधि १७

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि समीक्षे ।
मित्रस्य चक्षुषा समीक्षामहे १८

दृते दृꣳह मा ।
ज्योक्ते सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशि जीव्यासम् १९

नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ।
अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भव २०

नमस्तेऽअस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे २१

यतोयतः समीहसे ततो नोऽअभयङ्कुरु ।
शन्नः कुरु प्रजाभ्योभयन्नः पशुभ्यः २२

सुमित्रिया नऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योस्मान्द्वेष्टि यञ्च वयन्द्विष्मः २३
तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः
शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः
शतात् २४

इति षट्त्रिंशोऽध्यायः

# अथ सप्तत्रिंशोऽध्यायः

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददे नारिरसि १

युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः २

देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासन्देवयजने
पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ३

देव्यो वम्र्यो भूतस्य प्रथमजा मखस्य वोद्य शिरो राध्यासन्देवयजने
पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ४

इयत्यग्रऽआसीन्मखस्य तेद्य शिरो राध्यासन्देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे ५

इन्द्रस्यौज स्थ मखस्य वोद्य शिरो राध्यासन्देवयजने पृथिव्याः ।
मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे
। मखाय त्वा मखस्य त्वा शीर्ष्णे ६

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरन्नर्यम्पङ्क्तिराधसन्देवा यज्ञन्नयन्तु नः । मखाय त्वा
मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ।

मुखाय त्वा मुखस्य त्वा शीर्ष्णे ७

मुखस्य शिरोऽसि ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखस्य शिरोऽसि ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखस्य शिरोऽसि ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ८

अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे । मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ९

ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे ।
मुखाय त्वा मुखस्य त्वा शीर्ष्णे । मुखाय त्वा मुखस्य त्वा शीर्ष्णे
१०

घुमाय॑ त्वा मुखाय॑ त्वा सूर्य॑स्य त्वा तप॑से ।
दे॒वस्त्वा॑ सवि॒ता मध्वा॑नक्तु पृथि॒व्याः स्ँस्पृश॑स्पाहि । अ॒र्चिर॑सि शो॒चिर॑सि॒ तपो॑सि ११

अना॑धृष्टा पु॒रस्ता॑द॒ग्नेराधि॑पत्य॒ऽआयु॑र्मे दाः पु॒त्रव॑ती
दक्षिण॒तऽइन्द्र॒स्याधि॑पत्ये प्र॒जाम्मे॑ दाः ।
सु॒षदा॑ प॒श्चाद्दे॒वस्य॑ सवि॒तुराधि॑पत्ये॒ चक्षु॑र्मे दा॒ऽआश्रु॑तिरु॒त्तर॒तो धा॒तुराधि॑पत्ये रा॒यस्पोष॑म्मे दाः ।
विधृ॑तिरु॒परि॑ष्टा॒द्बृह॒स्पते॒राधि॑पत्य॒ऽओजो॑ मे दा॒ विश्वा॑भ्यो मा ना॒ष्ट्राभ्य॑स्पाहि॒ मनो॒रश्वा॑सि १२

स्वाहा॑ म॒रुद्भिः॒ परि॑श्रीयस्व दि॒वः स्ँस्पृश॑स्पाहि ।
मधु॒ मधु॒ मधु॑ १३

गर्भो॑ दे॒वाना॑म्पि॒ता म॑ती॒नाम्पतिः॑ प्र॒जाना॑म् ।
सन्दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सः सूर्ये॑ण रोचते १४

सम॒ग्निर॒ग्निना॑ गत॒ सन्दैवे॑न सवि॒त्रा सः सूर्ये॑णारोचिष्ट ।
स्वाहा॒ सम॒ग्निस्तप॑सा गत॒ सन्दैव्ये॑न सवि॒त्रा सः सूर्ये॑णारूरुचत १५

ध॒र्ता दि॒वो विभा॑ति॒ तप॑सस्पृथि॒व्यान्ध॒र्ता दे॒वो दे॒वाना॒मम॑र्त्यस्तपो॒जाः ।
वाच॑म॒स्मे नियच्छ देवा॒युव॑म् १६

अप॑श्यङ्गो॒पामनि॑पद्यमान॒मा च॒ परा॑ च प॒थिभि॒श्चर॑न्तम् ।

स सुध्रीचीः स विषूचीर्वसानऽआवरीवर्त्ति भुवनेष्वन्तः १७

विश्वासाम्भुवाम्पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते ।
देवश्रुत्त्वन्देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वान्देववीतये ।
मधु माध्वीभ्याम्मधु माधूचीभ्याम् १८

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वोऽअध्वरन्दिवि देवेषु धेहि १९

पिता नोसि पिता नो बोधि नमस्तेऽअस्तु मा मा हिꣳसीः ।
त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सह पत्या भूयासम् २०

अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ।
रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा २१

इति सप्तत्रिंशोऽध्यायः

# अथाष्टात्रिंशोध्यायः

देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् ।
आददेदित्यै रास्नासि १
इडऽएह्यदितऽएहि सरस्वत्येहि ।
असावेह्यसावेह्यसावेहि २

अदित्यै रास्नासीन्द्राण्याऽउष्णीषः ।
पूषासि घर्माय दीष्व ३

अश्विभ्याम्पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व ।
स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ४

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेकः ।
उर्वन्तरिक्षमन्वेमि ५

गायत्रञ्छन्दोसि त्रैष्टुभञ्छन्दोसि द्यावापृथिवीभ्यान्त्वा
परिगृह्णाम्यन्तरिक्षेणोपयच्छामि ।
इन्द्राश्विना मधुनः सारघस्य घर्मम्पात वसवो यजत वाट् ।
स्वाहा सूर्यस्य रश्मये वृष्टिवनये ६

समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ।
अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहा ।
अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहा ७

इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहेन्द्राय त्वाभिमातिघ्ने स्वाहा ।
सवित्रे त्वऽऋभुमते विभुमते वाजवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ८

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय स्वाहा घर्मः पित्रे ९

विश्वाऽआशा दक्षिणसद्विश्वान्देवानयाडिह ।
स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना १०

दिवि धाऽइमँयज्ञमिमँयज्ञन्दिवि धाः ।
स्वाहाग्नये यज्ञियाय शँयजुर्भ्यः ११

अश्विना घर्मम्पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः ।
तन्त्रायिणे नमो द्यावापृथिवीभ्याम् १२

अपातामश्विना घर्ममनु द्यावापृथिवीऽअमꣳसाताम् ।
इहैव रातयः सन्तु १३

इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्याम्पिन्वस्व ।
धर्मासि सुधर्मामेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रन्धारय विशन्धारय १४

स्वाहा पूष्णे शरसे स्वाहा ग्रावभ्यः स्वाहा प्रतिरवेभ्यः ।
स्वाहा पितृभ्यऽऊर्ध्वबर्हिभ्यो घर्मपावभ्यः स्वाहा

द्यावापृथिवीभ्याऽँ
स्वाहा विश्वेभ्यो देवेभ्यः १५

स्वाहा रुद्राय रुद्रहूतये स्वाहा सञ्ज्योतिषा ज्योतिः ।
अहः केतुना जुषताऽँ सुज्योतिर्ज्योतिषा स्वाहा ।
रात्रिः केतुना जुषताऽँ सुज्योतिर्ज्योतिषा स्वाहा ।
मधु हुतमिन्द्रतमेऽअग्नावश्याम ते देव घर्म नमस्तेऽअस्तु मा मा
हिꣳसीः १६

अभीममहिमा दिवंविप्रो बभूव सप्रथाः ।
उत श्रवसा पृथिवीऽँ सꣳसीदस्व महाँ२॥ऽअसि रोचस्व
देववीतमः । वि धूममग्नेऽअरुषम्मियेध्य सृज प्रशस्त दर्शतम्
१७

या ते घर्म दिव्या शुग्या गायत्र्याऽँ हविर्धाने ।
सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहा ।
या ते घर्मान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रे ।
सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहा ।
या ते घर्म पृथिव्याऽँ शुग्या जगत्याऽँ सदस्या ।
सा तऽआप्यायतान्निष्ट्यायतान्तस्यै ते स्वाहा १८

क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वम्पाहि ।
विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे १९

चतुःस्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः स नः
सर्वायुः सप्रथाः ।

अप द्वेषोऽअप ह्वरोन्यव्रतस्य सश्चिम २०

घर्मैतत्ते पुरीषन्तेन वर्धस्व चा च प्यायस्व ।
वर्धिषीमहि च वयमा च प्यासिषीमहि २१
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
सᳬ सूर्येण दिद्युतदुदधिर्निधिः २२

सुमित्रिया नऽआपऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु
योस्मान्द्वेष्टि यञ्च वयन्द्विष्मः २३

उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् ।
देवन्देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् २४

एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि २५

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितम्मयि गृह्णाम्यक्षितम् २६

मयि त्यदिन्द्रियम्बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह
२७

पयसो रेतऽआभृतन्तस्य दोहमशीमह्युत्तरामुत्तराᳪ समाम् ।
त्विषः सँवृक्क्रत्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः ।
इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमतऽउपहूतऽउपहूतस्य भक्षयामि
२८

इत्यष्टात्रिंशोध्यायः

# अथैकोनचत्वारिंशोऽध्यायः

स्वाहा प्राणेभ्यः साधिपतिकेभ्यः ।
पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवे स्वाहा ।
दिवे स्वाहा सूर्याय स्वाहा १

दिग्भ्यः स्वाहा चन्द्राय स्वाहा नक्षत्रेभ्यः स्वाहाद्भ्यः स्वाहा वरुणाय स्वाहा ।
नाभ्यै स्वाहा पूताय स्वाहा २

वाचे स्वाहा प्राणाय स्वाहा प्राणाय स्वाहा ।
चक्षुषे स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा श्रोत्राय स्वाहा ३

मनसः काममाकूतिँवाचः सत्यमशीय ।
पशूनाँ रूपमन्नस्य रसो यशः श्रीः श्रयताम्मयि स्वाहा ४

प्रजापतिः सम्भ्रियमाणः सम्राट्सम्भृतो वैश्वदेवः सँसन्नो घर्मः प्रवृक्तस्तेजऽउद्यतऽआश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् ।
मैत्रः शरसि सन्ताय्यमाने वायव्यो ह्रियमाणऽआग्नेयो हूयमानो वाग्घुतः ५

सविता प्रथमेहन्नग्निर्द्वितीये वायुस्तृतीयऽआदित्यश्चतुर्थे चन्द्रमाः पञ्चमऽऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे ।
मित्रो नवमे वरुणो दशमऽइन्द्रऽएकादशे विश्वे देवा द्वादशे ६

उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ।
सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ७

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिङ्कृत्स्नहृदयेन भवँयक्ना ।
शर्वम्मतस्नाभ्यामीशानम्मन्युना
महादेवमन्तःपर्शव्येनोग्रन्देवँवनिष्ठुना वसिष्ठहनुः शिङ्गीनि
कोश्याभ्याम् ८
उग्रँल्लोहितेन मित्रꣳ सौव्रत्येन रुद्रन्दौर्व्रत्येनेन्द्रम्प्रक्रीडेन मरुतो
बलेन साध्यान्प्रमुदा ।
भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्वम्महादेवस्य यकृच्छर्वस्य वनिष्ठुः
पशुपतेः पुरीतत् ९

लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा
लोहिताय स्वाहा लोहिताय स्वाहा मेदोभ्यः स्वाहा मेदोभ्यः
स्वाहा ।
माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः
स्वाहास्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः
स्वाहा ।
रेतसे स्वाहा पायवे स्वाहा १०

आयासाय स्वाहा प्रायासाय स्वाहा सँयासाय स्वाहा वियासाय
स्वाहोद्यासाय स्वाहा ।
शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ११

तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय
स्वाहा ।

निष्कृत्यै स्वाहा प्रायश्चित्त्यै स्वाहा भेषजाय स्वाहा १२

यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा । ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳩ स्वाहा १३

इत्येकोनचत्वारिंशोऽध्यायः

# अथ चत्वारिंशोऽध्यायः

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्याञ्जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् १

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवन्त्वयि नान्यथेतोस्ति न कर्म लिप्यते नरे २

असुर्या नाम ते लोकाऽअन्धेन तमसावृताः ।
ताँस्ते प्रेत्यापिगच्छन्ति ये के चात्महनो जनाः ३

अनेजदेकम्मनसो जवीयो नैनद्देवाऽआप्नुवन्पूर्वमर्शत् ।
तद्धावतोन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ४

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ५

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति ।
सर्वभूतेषु चात्मानन्ततो न विचिकित्सति ६

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोकऽएकत्वमनुपश्यतः ७

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोर्थान्व्यदधाच्छाश्वतीभ्यः
समाभ्यः । ८

अन्धन्तमः प्रविशन्ति येसम्भूतिमुपासते ।
ततो भूयऽइव ते तमो यऽउ सम्भूत्याᳪ रताः ९

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणाँये नस्तद्विचचक्षिरे १०

सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयᳬ सह ।
विनाशेन मृत्युन्तीर्त्वा सम्भूत्यामृतमश्नुते ११

अन्धन्तमः प्रविशन्ति येविद्यामुपासते ।
ततो भूयऽइव ते तमो यऽउ विद्यायाᳪ रताः १२
अन्यदेवाहुर्विद्यायाऽअन्यदाहुरविद्यायाः ।
इति शुश्रुम धीराणाँये नस्तद्विचचक्षिरे १३

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयᳬ सह ।
अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुते १४

वायुरनिलममृतमथेदम्भस्मान्तᳬ शरीरम् ।
ओ३म् । क्रतो स्मर । क्लिबे स्मर । कृतᳪ स्मर १५

अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भुयिष्ठान्ते नमऽउक्तिँविधेम १६
हिरण्मयेन पात्रेण सत्यस्यापिहितम्मुखम् ।
योसावादित्ये पुरुषः सोसावहम् ।
ओ३म् खम्ब्रह्म । १७

इति चत्वारिंशोऽध्यायः

इत्युत्तरविंशतिः ।
इति माध्यन्दिनवाजसनेयिशुक्लयजुर्वेदसंहिता